त्रिनेत्रंचेतितुपाठेत्रीणिनेत्राणियस्यतंत्रिनेत्रंमहासुरंत्रिशूलेन चशब्दात्ससैन्यं ॥ परमाईश्वरीअश्नोतेराशुकर्मणि वरट्चेच्चोपधायाः । यद्वापरमेश्वरस्यस्त्रीप रमेश्वरी ॥ १७ ॥ एकार्थवाचकौ ॥ १८ ॥ रणेदेवीअसिनाखड्गेनबिडालस्यमहासुरस्यशिरोमूर्द्धानंकायाच्छरीरात् वैप्रख्यातितः पातयामास ॥ रणेदेवी शरैःदुर्धरंनामदुर्मुखंचोभौनाममहासुरौ कर्म यमक्षयंयमगृहंद्वितीयंकर्म निन्येप्रापयामास ॥ नयतिर्द्विकर्मकः ॥ क्षयोयक्ष्मणिकल्पांतेनिलयेपचयेपिच ॥ कालंचकालदंडेनकालरात्रिरपातयत् ॥ कालंनाममहासुरंकालरात्रिरंबिकाकालदण्डेनापातयत् प्राभ्रंशयत् ॥ १९ ॥ उग्रदर्शनंनाममहासुरंअत्युग्रैःखड्गपा तैः अताडयत् ॥ तडआघातेचुरादिः ॥ असिनैवअसिलोमानंमहासुरमच्छिदत् अच्छैत्सीत् ॥ गणैः सिंहेनदेव्याचजयक्ष्वेडाकृतोत्सवैः ॥ गणादिभिःउ त्सवैरणोत्सवैःजयसंबंधिनिक्ष्वेडाकृताजयसिंहनादःकृतइत्यर्थः ॥ क्ष्वेडातुसिंहनादःस्यात् ॥ कालंवेत्यादिश्लोकद्वयंकेचित्पठंतिकेचिन्तुन ॥ २० ॥ एवं

उग्रास्यमुग्रवीर्यंचतथैवचमहाहनुं ॥ त्रिनेत्राचत्रिशूलेनजघानपरमेश्वरी ॥ १८ ॥ बिडालस्यासिनाकायात्पातया मासवैशिरः॥दुर्धरंदुर्मुखंचोभौशरैर्निन्येयमक्षयं॥कालंचकालदंडेनकालरात्रिरपातयत्॥१९॥"उग्रदर्शनमत्युग्रैःख ड्गपातैरताडयत् ॥ असिनैवासिलोमानमच्छिदत्सारणोत्सवे ॥ गणैःसिंहेनदेव्याचजयक्ष्वेडाकृतोत्सवैः" ॥ २०॥ एवंसंक्षीयमाणेतुस्वसैन्येमहिषासुरः॥ माहिषेणस्वरूपेणत्रासयामासतान्गणान्॥ २१॥ ॥छ॥

प्रागुक्तभंग्यास्वसैन्येआत्मीयसैन्येस्वयंसंक्षीयमाणेसतिमहिषासुरस्तुतदसहमानःसन्माहिषेणमहिषसंबंधिना महिषाकारेणस्वरूपेणतान्देवीगणान्त्रास यामासउद्वेजयामास ॥ संक्षीयमाणइतिक्षिक्षयेभ्वादिरकर्मकःपरस्मैपदीइतितुप्रयोगतोंतर्भावितण्यर्थविवक्षायांनाभुक्तंक्षीयतेकर्मक्षीयंतेचास्यकर्माणीति वत्सकर्मकत्वेसतिकर्मकर्त्तरिलटःशानचिकर्मवत्कर्मणातुल्यक्रियइतियक्यात्मनेपदेऽकृत्सार्वधातुकयोर्दीर्घेरूपं ॥ २१ ॥ महिषासुरःतुंडप्रहारेणतुंडेनव क्त्रेणजनिताघातेनकांश्चिद्गणान्देवीरोषजनितान्पुरुषान्रणशूरान्भूतलेपातयामास ॥ तथाक्षुरक्षेपैरपरान्भूमौपातयामास॥ शफंक्लीबेक्षुरःपुमान् ॥ सत थान्यॉल्लांगूलताडितान्गणान्भूमौपातयामास ॥ पुच्छोलांगूलवालांगूले ॥ सतथान्यांश्चशृंगाभ्यांविदारितान्गणान्भूमौपातयामास ॥ दारितेभिन्नभेदितौ॥ सतथावेगेनजवेनकांश्चिदपरान्भूमौपातयामास ॥ सतथामहिषःनादेनध्वनिनाकंठगर्जितेनापरान्व्याकुलचित्तान्भूमौपातयामास ॥ अपरान्भ्रमणेनप

सतथावेगेनजयेनकांश्चिदपरान्भूमौपातयामास ॥ सतथामहिषः [illegible]

ब्धितिविकल्पेनकर्मधारयत्वातिदेशाद्दिरुक्तयोर्भागयोर्मध्यपूर्वभागसंबंधिन्याधिभक्तेर्लुक् ॥ श्वासानिलापविशीर्णाःश्वासानिलहताःशतशःश्वासानिल लाहताःशीर्णानिपेतुर्नभसोचलाः ॥ अत्रपाठत्रयेतस्यमहिषस्यरोषजाःश्वासाएवअनिलाःवायवःतैरस्ताःक्षिप्ताःअतएवविशीर्णाः चूर्णीभूताःअचलाःपर्व ताःनभसःसकाशान्निपेतुःनिपतिताः ॥ यद्वा ॥ श्वासानिलास्ताःशतशःशतंशतंशतशः ॥ संख्यैकवचनाच्चवीप्सायांशस्प्रत्ययः ॥ यद्वा ॥ श्वासानिलैराह ताःताडिताइत्यनुसंधेयं ॥ शीर्णाःचूर्णीभूताः ॥२७॥ इतिप्रागुक्तरीत्याक्रोधसमाध्मातंक्रोधाग्निसंयुक्तंक्रोधेनसमंतादाविष्टंविजृंभितंतंअभ्यापतंतंमहिषं महासुरंदृष्ट्वावीक्ष्यतदातद्वधायतंमहिषंहंतुंचंडिकादेवीकोपमकरोत् वधहिंसार्थःइति वधिःप्रकृत्यंतरंजनिवध्योश्चेतिवधिग्रहणादवसीयते तद्वधायेतितस्यव धनंवधःतद्वधः भावेघञ् ॥ जनिवध्योश्चेत्यतउपधायावृद्ध्यभागः ॥ क्रियार्थोपपदस्यचकर्मणिस्थानिनइतिचतुर्थी तद्वधंविधातुंकोपंक्रोधमकरोत् ॥

इतिक्रोधसमाध्मातमापतंतंमहासुरं ॥ दृष्ट्वासाचंडिकाकोपंतद्वधायतदाकरोत् ॥ २८॥ साक्षिप्त्वातस्यवैपाशंतंबबं धमहासुरं ॥ तत्याजमाहिषंरूपंसोपिबद्धोमहामृधे॥२९॥ततः सिंहोभवत्सद्यः यावत्तस्यांबिकाशिरः ॥ छिनत्तिता वत्पुरुषःखड्गपाणिरदृश्यत॥३०॥ततएवाशुपुरुषंदेवीचिच्छेदसायकैः॥तंखड्गचर्मणासार्धंततःसोभून्महागजः ३१

॥ २८ ॥ म्रियंतेस्मिन्वीराःमृधंयुद्धंतत्रमहतिमृधेसादेवीतावत्तस्यमहिषासुरस्यवधायवैप्रसिद्धंवरुणादवाप्तंपाशमायुधंक्षिप्त्वाप्रवर्त्यतंमहासुरंबबंध ॥ अथ सपाशबंधमसहिष्णुःमाहिषंरूपंतत्याजअत्याक्षीत् ततोनुससंत्यक्तमहिषाकारोमायावित्वादन्यएवपशुःशार्दूलःखड्गःपौत्रीवाप्रशस्तंप्रमथेनक्षमगात्रोभूत्॥ अथदेव्यापाशेनसोपिवाबद्धएवाभूत् ॥ २९ ॥ ततोमहिषादिरूपपरित्यागादनंतरंसमहासुरोमायावित्वात्सद्यःसपदिदेव्यासमंयोद्धुंसिंहोऽभवत् ॥ ततों बिकादेवीतस्यमायामयसिंहस्यशिरः मूर्द्धानंयावद्यावताकालेनच्छिनत्तिछेत्स्यतितावत्तावत्येवकालेसमायावीमहासुरःखड्गपाणिःपुरुषःप्रादुर्भवन्नदृश्यतऐ क्ष्यतदेव्येतिशेषः ॥ यावत्तावच्चसाकल्येवधौमानेवधारणे ॥ खड्गःपाणौयस्यसतथोक्तः ॥ प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभयतइतिवक्तव्यं ॥ ३० ॥ ततः खड्गपाणेःपुरुषस्यदर्शनानंतरमेवदेवीआशुसत्वरंसायकैःआशुगैःखड्गचर्मणासार्द्धंतंखड्गपाणिंपुरुषंकंठेचिच्छेद ॥ खड्गंचचर्मचपुरुषंचसायकैश्चिच्छेदेतिसू

रितोग्रतःपार्श्वतश्चभूतलेपातयामास ॥ महिषः अन्यान्निश्वासपवनेननिश्वासएवपवनोवायुःतेनभूतलेपातयामास ॥ २२ ॥ २३ ॥ इत्थंसमहिषासुरो महादेव्याःअंबिकायाःप्रमथानांपार्षदानांअनीकानिसैन्यानिप्रमथगणान्निपात्यभूमौनितरांपातयित्वातस्याःसिंहंहंतुंअभ्यधावतआभिमुख्येनाधावत् आद्रवत् । धावुगतिशुद्ध्योःलङ्स्वरितेत्वादात्मनेपदं ॥ वरूथिनीबलंसैन्यंचक्रंचानीकमस्त्रियां ॥ ततःप्रमथगणमथनतःसिंहंहंतुंआगमनंतस्य ततश्चमहिषेमहासुरेविषयेंबिकाचंडिकाकोपंचक्रे ॥ २४ ॥ महावीर्यःसमहिषासुरःक्षुरक्षुण्णमहीतलःसन्योद्धुंक्रोधात्अग्रैकपादशफनिष्पिष्टकृताग्रक्षोणिभागःसन् उच्चैरभ्रंलिहाभ्यांशृंगाभ्यांउच्चैरभ्रंलिहान्पर्वतान् उच्चैरभ्रंलिहमुकुटमूर्द्धनिदेव्याउच्चैश्चिक्षेपउच्चैरक्षैप्सीत् ॥ अथचोच्चैर्ननाद ॥ णदअव्यक्तेशब्दे ॥ गलगर्जनंचोच्चैश्चकार ॥ महावीर्यःवीर्यसंपन्नःसत्ववान्महिषोतितरामितियावत् ॥ २५ ॥ तस्यमहिषासुरस्यवेगेनजवेनयुक्तंभ्रमणंतेनविक्षुण्णाविशेषेणसंपि

कांश्चित्तुंडप्रहारेणक्षुरक्षेपैस्तथापरान् ॥ लांगूलताडितांश्चान्यान्शृंगाभ्यांचविदारितान् ॥ २२॥ वेगेनकांश्चिदपरान्नादेनभ्रमणेनच ॥ निश्वासपवनेनान्यान्पातयामासभूतले॥ २३ ॥ निपात्यप्रमथानीकमभ्यधावतसोसुरः ॥ सिंहंहंतुंमहादेव्याः कोपंचक्रेततोंबिका ॥ २४ ॥ सोपिकोपान्महावीर्यः क्षुरक्षुण्णमहीतलः ॥ शृंगाभ्यांपर्वतानुच्चैश्चिक्षेपचननादच ॥२५॥ वेगभ्रमणविक्षुण्णमहीतस्यव्यशीर्यत॥लांगूलेनाहतश्चाब्धिःप्लावयामाससर्वतः॥२६॥ धुतशृंगविभिन्नाश्चखंडंखंडंययुर्घनाः ॥ श्वासानिलास्ताःशतशोनिपेतुर्नभसोऽचलाः ॥ २७॥ ॥छ॥

ष्टामहीव्यशीर्यतस्वयमेवविशीर्णाभवत् ॥ शृहिंसायांक्र्यादिःपरस्मैपदीविपूर्वोकर्मकः ॥ इहतुअंतर्भावितण्यर्थविवक्षायां ॥ विशीर्यंतेमेघःस्वयमेवविशीर्यंतेहेतुःस्वयमेवेतिवत्कर्मकर्त्तरिलङिरूपं ॥ किंचतस्यमहिषस्यलांगूलेनपुच्छेनआहतःताडितोब्धिःअर्णवःसर्वतःसर्वत्रपृथिव्यांसकलजनान्प्लावयामास॥ वारिपूरमग्नंविश्वंचकार ॥ तसिप्रकरणेआद्यादिभ्यउपसंख्यानमित्यधिकरणेतसिः ॥ यद्वा ॥ कर्मणिल्यब्लोपेपंचमी ॥ सर्वतःसर्वांपृथ्वींप्लावयामास ॥ ॥ २६ ॥ घनाश्चमहांतोमेघाः तेनमहिषासुरेणधुताभ्यांशृंगाभ्यांविभिन्नाःविदारिताःसंतःखंडंखंडंशकलंशकलंययुः ॥ महिषेणधुतशृंगविदारिताःमहांतोमेघाःखंडप्रकाराःखंडसदृशाःसंतःययुरित्यर्थः ॥ प्रकारेगुणवचनस्येत्यधिकस्याल्पसादृश्येगुणवचनस्यद्विर्भावः ॥ खंडखंडंययुरितितुपाठेकर्मधारयवद्त्तरे

तामघाःखड्गप्रकाराःखड्गसदृशाःसंतःइयुरित्यर्थः ॥ प्रकार [illegible]

चयितुंसार्द्धमित्युक्तं ॥ खड्गश्चचर्मचखड्गचर्मसेनांगत्वादेकवद्भावः ॥ वेनसार्द्धं ॥ फलकोखीफलंचर्म ॥ चर्ममयंचर्मगात्रत्राणंहस्तग्राह्यंफलकं ॥ करेणच

महासिंहंतंचकर्षजगर्जच ॥ ततःपुरुषरूपतःसकाशात्समहासुरःमहागजीभूत् ॥ ३१ ॥ सचमहागजःकरेणशुंडादंडेनतंप्रसिद्धंदेवीवाहनंसिंहंचकर्ष

आकृष्टवान् जगर्जचबृंहितंचचकार ॥ (गर्जशब्दे)भ्वादिःपरस्मैपदी ॥ गजःसिंहंचकर्षेतिहिअसुरविनाशसूचकउत्पातोयंप्रसिद्धंवैपरीत्यात् ॥ ३२ ॥

ततोदेवीतुपुनःसिंहंकर्षतःआक्षिपतःआहरतःतस्यमहागजस्यकरंशुंडादंडंखड्गेनचंद्रहासेननिरकृंततनिकृष्याच्छैत्सीत् ॥ कृतीछेदनेपरस्मैपदी ॥ यद

भ्यधुः ॥ कृणत्तिकृंततीत्येते वेष्टनेछेदनेक्रमादिति ॥ इहतुछांदसमात्मनेपदं ॥ ऋषयश्छांदसम्पदमनुकुर्वंति ॥ अन्यथानिरकृंतदित्येवस्यात् ॥ कर्षत

स्तत्करंदेवीतिपाठेकर्षतोगजस्यकरः प्रसिद्धः तत्करइतिव्याख्या ॥ इहसमहासुरः प्राक्महाहवक्षमः ॥ महिषोभूत्ततोव्याघ्रः खड्गः पोत्रीहरिः पुमान् ।

गजोथमहिषोभूयोमायावीसमहामृधे,इत्येतदावेदयितुमाह ॥ ततोगजवपुस्त्यागानन्तरं भूयःपुनरपि समहासुरः माहिषंवपुराश्रितःप्राप्तवान्सन् तथैव

करेणचमहासिंहंतंचकर्षजगर्जच ॥ कर्षतस्तुकरंदेवीखड्गेननिरकृंतत ॥ ३२ ॥ ततोमहासुरोभूयोमाहिषंवपुरा

श्रितः ॥ तथैवक्षोभयामासत्रैलोक्यंसचराचरं ॥ ३३ ॥

पूर्ववदेवप्राग्वत्महिषःसन्तथैवत्रैलोक्यंक्षोभयामास

क्षोभंप्रापयामास ॥ तथैवसचराचरंत्रैलोक्यंलोकत्रयंक्षोभयामास ॥ आश्रितइतिश्रिञ्सेवायां ॥ प्रतिष्ठितप्रतिज्ञानार्थःसकर्मकः ॥ गत्यर्थाकर्मकश्लि

षशीङ्स्थासेत्यादिनाकर्त्तरिक्तः ॥ वपुराश्रितःअंगीकृतवान्सन्त्रैलोक्यंक्षोभयामासेत्यर्थः ॥ आस्थितेत्यविसर्गपाठेतु आङःस्थःप्रतिज्ञाने इत्यात्मनेपदं

कर्तरिलुङ्स्थाघ्वोरिच्चेत्यकारस्यइत्वंसिचःकित्वंचतेनगुणाभावः॥ह्रस्वादंगादितिसिचोलोपः ॥ सइतिच्छेदेतुमहासुरइत्यर्थः। चराश्चदेवाःअचराश्चपर्व

तादयः चराचरं सर्वोद्वंद्वोविभाषैकवद्भवति ॥ चराचरात्मकंत्रैलोक्यंसमहासुरःक्षोभयामासेत्यर्थः ॥ यद्वा ॥ चराश्चाचराश्चचराचरांःतैःसहितंत्रैलोक्यंस

चराचरं संभवात्स्वरूपाख्यानतोविशेषणविशेष्यभावः ॥ चरिर्गत्यर्थः ॥ चरिचलिपतिवदीनांवाद्वित्वमच्याक्चाभ्यासस्येतिपचाद्यचिद्विर्भावेभ्यासस्यच

आगागमः ॥ आग्विधिसामर्थ्याद्धलादिशेषाभावः॥अन्यथाह्यागमादेशयोर्विशेषाभावादागमलिंगमपार्थकंस्यात्॥चरिष्णुजंगमचरंत्रसमिंगंचराचरं॥ ३३

ततस्त्रैलोक्यक्षोभणाज्जगन्माताजगतांजननीजगद्धिता चण्डिकादेवीक्रुद्धासतीअतएवारुणलोचना अरुणेरक्तेलोचनेयस्याःसा उत्तमंअमृतंपानंमधुपुनः
पुनःपपौ॥पापाने कर्मणिल्युट्॥ लीलयामध्वेवपपौ पुनःपुनश्चजहासैवयुद्धंतुनगणयामास॥ हसेहसनेलिटिस्तिपोणल्॥ पपाविख्यातऔणलः॥वीरपानं
चकारेत्यर्थः ॥ वीरपानंतुयत्पानंवृत्तेभाविनिवारणे ॥ वीराणांकर्त्तव्यंमद्यपानंवीरपानं ॥ मुहुःपुनःपुनःशश्वदभीक्ष्णमसकृत्समाः ॥ वटायुतायुतोन्मानं
मधुमांसोपदंशकं ॥ एकैकवारतश्चण्डीपपावत्ररणोत्सवे ॥३४॥ बलेनसामर्थ्येनवीर्येणप्रभावेणतेजसामदेनहर्षेणगर्वेणचोद्धतःअविनीतोनिर्मर्यादउत्कटः
समहिषासुरोपिननर्दचकण्ठगर्जनंचकार ॥ नर्दगर्दशब्दे ॥ चण्डिकांप्रतिभूधरान् गिरीन्विषाणाभ्यांशृंगाभ्यांचिक्षेपप्रक्षिप्तवान्। अविनीतःसमुद्धतः॥
स्थैर्यसामर्थ्यसैन्येषुबलंनाकाकसीरिणोः ॥ वीर्यंबलंप्रभावश्च ॥ ३५ ॥ साचण्डिकातेनमहिषासुरेणप्रहितान्क्षिप्तान्तान्भूधरान्गिरीन्शरोत्करैःशराणा

ततः क्रुद्धाजगन्माताचंडिकापानमुत्तमं॥ पपौपुनःपुनश्चैवजहासारुणलोचना॥ ३४ ॥ ननर्दचासुरःसोपिबलवी
र्यमदोद्धतः॥ विषाणाभ्यांचचिक्षेपचंडिकांप्रतिभूधरान्॥ ३५॥ साचतान्प्रहितांस्तेनचूर्णयंतीशरोत्करैः॥ उवा
चतंमदोद्धूतमुखरागाकुलाक्षरं॥ ३६॥ ॥देव्युवाच॥ ॥गर्जगर्जक्षणंमूढमधुयावत्पिबाम्यहं॥ मयात्वयिहते
त्रैवगर्जिष्यंत्याशुदेवताः॥ ३७॥

मुत्करैःउत्क्षेपैःचूर्णयंतीनिःशेषयंतीसतीतंमहिषासुरं
मदोद्धूतमुखरागाकुलाक्षरंयथास्यात्तथाउवाच ॥ मदान्मधुपानजादुद्भूतोमुखेरागःतेनाकुलान्यक्षराणिवर्णायस्मिन्कर्मणिवचनेतन्मदोद्धूतमुखरागाकुलाक्षरं
क्रियाविशेषणानांकर्मत्वंनपुंसकैकत्वंचवाच्यं ॥ यद्वा ॥ मदोद्धूतमुखरागादेवीमदेनमधुपानजेनउद्धूतोजातोमुखेरागःकषायभावोयस्याःसा आकुलाक्षर
मितिक्रियाविशेषणं॥ आकुलानिव्यामिश्रितान्यस्पष्टाक्षराणियस्मिन्कर्मणितत्॥३६॥अत्रह्याकुलाक्षरमित्युक्तत्वाद्गर्जगर्जइत्येवंप्रतिपदंव्यत्यस्ताक्षरंदेव्यो
क्तं॥ ऋषिणातुतत्सत्कृत्यार्थसंगत्याप्रणीतं ॥ हेमूढहेअज्ञत्वंक्षणंतावद्गर्जगर्जयावदहंमधुपिबामि ॥ यावताक्षणेनमधुपास्यामितावंतंक्षणंत्वमपिकण्ठग
र्जनंकुरुकुरु ॥ तावदेवतवायुःततःक्षणांतरेमया [illegible] लवक्षणेवाआशुअविलंबितंदेवताइन्द्राद्यादयोदेवाग
र्जिष्यंत्यानन्दतोगास्यंति ॥ गृजिशब्देलृट् पिबामीतिपानाग्रेभविष्यतिकालेयावत्पुरानिपातयोर्लडितिलट्॥अहेमूढयथाजातमूर्खवैध्यर्थ्यबालिशाः॥ ३७॥

जिघ्यंस्यानन्दतोगास्यंति ॥ गृजिशब्देलट् पिबामी तिपानाग्रेभावेष्यातकालेयाव...

सादेवीएवमुक्त्वासमुत्पत्यसम्यक्उत्पत्यतंमहिषासुरंआरूढाआरूढवती एनंमहिषासुरंकण्ठेचकण्ठप्रदेशएवएकेनपादेनउच्चितेनाक्रम्यशूलेनाताडयत् ॥ सादेवीएवमुक्त्वासमुत्पत्यसम्यक्उत्पत्यतंमहिषासुरंआरूढा आरूढवती ॥ आरूढा इहतुगत्यर्थाकर्मकेत्यादिनाकर्त्तरिक्तः ॥ एनमित्यन्वादेशेरूपमिदमेतदोन्यतरस्यां ॥ ३८ ॥ ततोनंतरंसमहिषासुरःतयादे व्यापदापादेनआक्रांतःसशूलेनताडितोपितस्मान्निजमुखादात्मीयमुखात्सकाशादर्द्धनिःक्रांतएवअर्द्धेनशरीरेणनिर्गतःदेव्यावीर्येणबलेनसामर्थ्येनसंवृतः संछादितःस्तंभितःआसीत्तथैवास ॥ नसंपूर्णोनिःक्रांतःअर्धनिःक्रांतःअर्द्धेनवानिःक्रांतःअर्धनिःक्रांतः ॥ ३९ ॥ असौमहासुरोमहिषवक्त्रादर्द्धनिःक्रांतःशरीरस्यार्द्धःनिःक्रांतःविशेषणसमासः ॥ अर्द्धेनवानिःक्रांतःकर्त्तृकरणेकृताबहुलमितिसमासः ॥ नबहुव्रीहिः ॥ अर्द्धोनिःक्रांतोदेहभागोयस्येतिविग्रहप्रसंगात् ॥ ४० ॥

तडआघातेचुरादिः ॥ रार्द्धेननिर्गतः युध्यमानःयुद्धंकुर्वाणएवतयादेव्याभगवत्यामहासिनामण्डलाग्रेणशिरःतस्यासुरस्यउत्तमांगंछित्वाभूमौनिपातितः ॥

॥ ऋषिरुवाच ॥ ॥ एवमुक्त्वासमुत्पत्यसारूढातंमहासुरं ॥ पादेनाक्रम्यकंठेचशूलेनैनमताडयत् ॥ ३८ ॥ ततः सोपिपदाक्रांतस्तयानिजमुखात्ततः ॥ अर्द्धनिःक्रांतएवासीद्देव्यावीर्येणसंवृतः ॥ ३९ ॥ अर्द्धनिः क्रांतएवासौयुध्यमानोमहासुरः ॥ तयामहासिनादेव्याशिरश्छित्वानिपातितः ॥ ४० ॥ एवंसमहिषोनामससैन्यःससुहृद्गणः ॥ त्रैलोक्यंमोहयित्वातुतयादेव्याविनाशितः ॥ ४१ ॥ त्रैलोक्यस्थैस्तदाभूतैर्महिषेविनिपातिते ॥ जयेत्युक्तंततः सर्वैः सदेवासुरमानवैः ॥ ४२ ॥ ततो हाहाकृतंसर्वंदैत्यसैन्यंननाशयत् ॥ प्रहर्षंचपरंजग्मुः सकलादेवतागणाः ॥ ४३ ॥

एवमुक्तरीत्यामहिषोनामप्रसिद्धःसमहासुरःसैन्यसहितः सुहृद्गणसहितः त्रैलोक्यंत्रींल्लोकान्मोहयित्वामोहंदुःखंप्रापय्यततोयुद्धंकुर्वाणःतयादेव्यानाशंप्रापितः ॥ महाकाल्यानिपातितइतिपाठेमहान्कालःउग्रःतत्पत्नीमहतीकालीदुर्गातयावा ॥ ४१ ॥ तदातस्मिन्समयेदेव्यामहिषेमहासुरेविनिपातितेसति त्रैलोक्यस्थैःसर्वैःपुरुषैःदेवींप्रतिजयलोकोत्कर्षेणवर्तस्वेत्युक्तं ॥ कीदृशैःदेवाःस्वर्लोकसद्मानःइन्द्रादयःअसुराःपातालवासिनोबलिप्रभृतयःमानवाभूलोकसद्मानोब्राह्मणादयःतैःसहितैः ॥ पुनःकीदृशैःतदाभूतैःतस्मान्महिषासुरादाभूताःपीडांप्राप्तवंतःतैः ॥ आस्तुस्यात्कोपपीडयोः ॥ भूप्राप्तावात्मनेपदीचुरादिः ॥ आधृषाद्वेतिणिजभावपक्षेकर्त्तरिक्तेरूपं ॥ योगविभागात्समासः ॥ इत्थंभूतेतिनिर्देशाद्वा ॥ ४२ ॥ ततोमहिषमर्द्दनादनंतरंयत्किंचिद्दैत्यसैन्यम

वशिष्टंस्वल्पंतदपिहाहाकृतंहाहाइतिससंभ्रमंदीनभावेनकृतंआहितंसत्ननाश ॥ णशअदर्शने ॥ अदर्शनमभावः ॥ अदृष्टमभूत् ॥ किंचदेवतानांगणाः
तुसकलाःसर्वेपिपरमुत्कृष्टंप्रहर्षंसंतोषंजग्मुश्चप्राप्तवन्तः ॥ हाविषादाशुगार्त्तिषु ॥ चापलेद्विभवतइतिवक्तव्यं ॥ संभ्रमेणप्रवृत्तिश्चापलं ॥ हाहाइतिसंभ्रमप्र
वृत्त्यादीनत्वेनकृतमनाथंननाश दैत्यसैन्यमित्यर्थः ॥ ४३ ॥ अथतांदेवींसुराःइन्द्रादयःदिविभवैर्दिव्यैर्महर्षिभिःसहसहिताःतुष्टुवुःस्तुतवन्तः ॥ सुराश्च
दिव्यामहर्षयश्चदेवींस्तुतवन्तइत्यर्थः ॥ अथगन्धर्वपतयश्चजगुः हाहाहूहूप्रभृतयोगन्धर्वाःगायमानाःतेषांपतयोगानविचक्षणाःतुम्बुरुप्रभृतयःगीतवंतः ॥
गैशब्देलिट् ॥ अथअप्सरोगणाश्चननृतुःउर्वशीप्रभृतयःस्वर्गवारांगनाःतासांगणाःनृत्यवंतोदेवीविजयेमहोत्सवे ॥ नृतीगात्रविक्षेपेनाव्येलिट्उस् ॥४४॥
इतिम॰श्रीतो॰श्रीमदुद्ध॰श्रीशंतनुचक्रवर्तिविरचितायांदेवीमाहात्म्यटीकायांमहिषासुरवधोशीतितमोध्यायः ॥ ८० ॥ ॥ महिषासुरेनिहतेसतिततोन

तुष्टुवुस्तांसुरादेवींसहदिव्यैर्महर्षिभिः ॥ जगुर्गंधर्वपतयोननृतुश्चाप्सरोगणाः ॥ ४४ ॥ इतिमार्कं॰ दे॰ महिषा
सुरवधोशीतितमोध्यायः ॥ ८० ॥ ॥ छ ॥ ॥ ऋषिरुवाच ॥ ॥ ततः सुरगणाः सर्वेदेव्याइंद्रपुरोगमाः ॥ स्तुति
मारेभिरेकर्त्तुंनिहतेमहिषासुरे ॥ १ ॥ शक्रादयः सुरगणानिहतेतिवीर्येतस्मिन्दुरात्मनिसुरारिबलेचदेव्या ॥ तां
तुष्टुवुः प्रणतिनम्रशिरोधरांसावाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥ ॥ ॥ छ ॥

न्तरंइन्द्रपुरोगमाःशक्रप्रमुखाःसर्वेपिसुरगणाःस्तुतिंकर्त्तुंआरेभिरेउपक्रांतवंतः ॥ रभराभस्ये॥आत्मनेपदेलिट् ॥ पुरोगच्छतीतिपुरोगमः इन्द्रःपुरोगमःअ
ग्रेसरोयेषांते ॥ १ ॥ रणेदेव्याचंडिकयातस्मिन्नतिवीर्येसुरारिबलेमहिषासुरसैन्येचअतिवीर्येदुरात्मनिमहिषासुरेचहतेसति प्रणतिनम्राशिरोधरांसाः प्रहर्ष
पुलकोद्गमचारुदेहाःशक्रादयःसुरगणाःतांदेवींवाग्भिःतुष्टुवुःस्तुतवंतः॥ वीर्यंबलंप्रभावश्च॥प्रणतिभिर्नम्राःशिरोधराःकंधराग्रीवाअंसाःस्कंधाभुजशिरांसिच
येषांते धरंतीतिधराःशिरसांधराःशिरोधराः प्रहर्षेप्रमोदेपुलकाःरोमांचाःतेषांउद्गमःप्रादुर्भावःतेनचारवोमनोहरादेहायेषांते ॥ वाग्भिरितिचतुर्विधाभिर्वाणी
भिः ॥ यद्भाष्यं ॥ चतुष्टयीशब्दानांप्रवृत्तिः जातिशब्दाः गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चतुर्थाइति ॥ अन्येत्वाहुः ॥ द्रव्यंगुणंक्रियांजातिमाहुः
शब्दाश्चतुर्विधाः । यदृच्छयाप्रयुक्ताःस्युःसंज्ञाशब्दाश्चपंचमाः ॥ अपरेत्वाहुः ॥ वैखरीशब्दनिष्पत्तिर्मध्यमाश्रुतिगोचरा ॥ द्योतितार्थाचपश्यंतीसूक्ष्माचा

शब्दाश्चतुर्विधाः । यदृच्छयाप्रयुक्ताःस्युःसंज्ञाशब्दाश्चपंचमाः ॥ अपरंचाहुः ॥ वैखरीशब्दनिष्पत्तिर्मध्यमाश्रुतिगोचरा ॥

व्यनपायिनीचैतिचतुर्विधावागुच्यते ॥ शब्दानांनिष्पत्तिर्यस्याःसा घटाद्यर्थरूपावाक्वैखरीत्युच्यते ॥ श्रुतिगोचराश्रोत्रग्राह्यावाक्मध्यमेत्युच्यते ॥ या
तितार्थोययासाद्योतितार्थाज्ञानरूपावाक्पश्यंतीत्युच्यते ॥ अनपायिनीब्रह्मरूपावाक्सूक्ष्मेत्युच्यते ॥ २ ॥ ययादेव्याआत्मशक्त्यास्वशक्त्याइदंज
गत् प्रपंचितंतांअखिलदेवमहर्षिपूज्यांअम्बिकांदेवींभक्त्याआनताःस्म ॥ सानोस्माकंशुभानिदधातुकरोतु ॥ तुहिचस्मह्वैपादपूरणे ॥ निःशेषाःसर्वेदेवाः
तेषांगणाःतेषांशक्तयः तासांसमूहाःतएवमूर्त्तयोयस्याःसा ॥ अखिलाःसर्वेदेवाःमहर्षयश्चतैस्तैःपूज्यांपूजनीयां आनतावयंभक्तिप्रव्हाः ॥ ३ ॥ यस्याःदेव्या
अतुलमनुपमंप्रभावंबलंवक्तुंसाकल्येनवर्णयितुंब्रह्माचतुर्मुखः भगवानैश्वर्यसम्पन्नःअनंतोविष्णुःहरश्चनालंनहिसमर्थःहिप्रसिद्धमेवतत् ॥ साचण्डिकादे
वीअखिलजगत्परिपालनायअशुभभयस्यनाशायमतिंकरोतु ॥ अखिलंजगत्परिपालयितुंअशुभेभ्योभयंनाशयितुंचस्वयंस्वांतंसदाऽवधानंकरोतु ॥ प्रभावः

॥ देवाऊचुः ॥ ॥ देव्याययाततमिदंजगदात्मशक्त्यानिःशेषदेवगणशक्तिसमूहमूर्त्या ॥ तामंबिकामखिलदेवमह
र्षिपूज्यांभक्त्यानताःस्मविदधातुशुभानिसानः ॥ ३ ॥ यस्याःप्रभावमतुलंभगवाननंतोब्रह्माहरश्चनहिवक्तुमलंबलंच
साचंडिकाखिलजगत्परिपालनायनाशायचाशुभभयस्यमतिंकरोतु ॥ ४ ॥ या श्रीःस्वयंसुकृतिनांभवनेष्वलक्ष्मीः
पापात्मनांकृतधियांहृदयेषुबुद्धिः ॥ श्रद्धासतांकुलजनप्रभवस्यलज्जातांत्वानताः स्मपरिपालयदेविविश्वं ॥ ५ ॥

प्रभुत्वं ॥ स्थौल्यसामर्थ्यसैन्येषुबलं ॥ अशुभभवस्येतिपाठेभवउदयः ॥ ४ ॥ हेदेविसुकृतिनांपुण्यवतांभवनेषुगेहेषुयाश्रीःसंपत्तिरभूदस्तिभविष्यतिस्वयं
तांत्वांनताःप्रणतावयंस्म ॥ अतःत्वंसुकृत्यात्मकंविश्वंश्रीःसतीपरिपालय ॥ हेदेविपापात्मनांभवनेषुयाऽलक्ष्मीःअभूदस्तिभविष्यति स्वयंतांत्वांनताः
प्रणताःवयं ॥ अतस्त्वंपापात्मकंविश्वंअलक्ष्मीःसतीपरिपालय ॥ हेदेविकृतधियांज्ञानिनांहृदयेषुयाबुद्धिःअभूदस्तिभविष्यतिस्वयंतांत्वांनताःप्रणतावयं अ
तस्त्वंकृतध्यात्मकंविश्वंबुद्धिःसतीपरिपालय ॥ हेदेविसतांसज्जनानांहृदयेषुयाश्रद्धासत्कर्मनिष्ठाऽभूदस्तिभविष्यतिस्वयंतांत्वांनतावयं अतःत्वंसदात्मकं
विश्वंश्रद्धासतीपरिपालय ॥ हेदेवित्वंकुलजनप्रभवस्यहृदयेयालज्जाभूदस्तिभविष्यतितांत्वांनतावयं ॥ अतःत्वंसत्कुलाचारसंरक्षणंलज्जालज्जासतीसत्कु
लजनप्रभात्मकंविश्वंपरिपालय ॥ स्मशब्दःपादपूरणे ॥ स्वयमव्ययं ॥ सुष्ठुअयःशुभावहोविधिर्यस्मिन्कर्मणिनमनेपरिपालनेवातत् ॥ ५ ॥ ॥६॥

असुराश्चदेवाश्च असुरदेवाःशाश्वतिकविरोधविवक्षायांस्वसुरदेवंतेषांगणाआदयोयेषांतेमनुष्यादीनांतेतथोक्ताः ॥ तेष्वुअजाद्यदंतमित्यसुरशब्दस्यपूर्वप्रयो
गः ॥ अजाद्यदंतत्वादभ्यर्हितत्वाच्चअमरदैत्यगणादिकेष्विति तुपाठः सभ्यः॥ हेदेविसर्वेष्वसुरादिगणेषुतवाद्भुतंरूपमचिंत्यंमनसापिचिंतयितुंस्मर्तुमप्यश
क्यंएतत्तवमनोहरंरूपंवाचाकिंवर्णयाम ॥ वर्णवर्णक्रियायांचुरादिलोडंतं ॥ यन्मनसापिस्मर्तुमशक्यंतद्वाचाकिंवर्णयितुंशक्यंस्यादितिभावः ॥ हेदेवितवभू
र्यधिकंअसुरक्षयकारिअतिवीर्यंचकिंवाचावर्णयामयन्मनसाप्यचिंत्यंस्यात् ॥ हेदेविसर्वेष्वसुरदेवगणादिकेष्वाहवेषुसंग्रामेषुतवाद्भुतानिचरितानिवीरकर्मा
णिकिंवर्णयामवाचायानिमनसापिस्मर्तुमशक्यानि ॥ ६ ॥ हेदेवित्वंत्रिगुणापित्रयोगुणायस्यांसासत्त्वंरजस्तमइतित्रयोगुणाः ॥ सत्त्वगुणात्वंवैष्णवीशक्तिः
सतीजगंतिरक्षसि रजोगुणात्वंब्राह्मीशक्तिःसतीसृजसि तमोगुणारौद्रीशक्तिःसतीसंहरसिअतःसर्जनीयसंरक्षणीयसंहरणीयानिजगंतिस्वर्गभूपातालाख्या
नियेषांत्वंहेतुरसि ॥ हेदेवित्वंहरिहरादिभिरपिदेवैःतत्त्वतोनज्ञायसेमायारूपत्वात् ॥ हेदेवित्वंअपाराअनवधिरनंता ॥ त्वंसर्वाश्रयासर्वआश्रयोयस्याः

**किंवर्णयामतवरूपमचिंत्यमेतत्किंचातिवीर्यमसुरक्षयकारिभूरि॥ किंचाहवेषुचरितानितवाद्भुतानिसर्वेषुदेव्यसुरदे**
**वगणादिकेषु ॥ ६ ॥ हेतुः समस्तजगतांत्रिगुणापिदेवैर्नज्ञायसेहरिहरादिभिरप्यपारा ॥ सर्वाश्रयाखिलमिदंजग**
**दंशभूतमव्याकृताहिपरमाप्रकृतिस्त्वमाद्या ॥ ७ ॥**

सा ॥ आश्रीयतेआश्रयासर्वस्याश्रयासर्वाश्रया ॥ हेदेवीदमखिलंजगत्तवैवांश
भूतंमायामयत्वात् ॥ जगतःअंशरूपेणनिष्पन्नंअंशत्वंभूतंप्रापदितिवांशभूतं ॥ त्वंअव्याकृताकेनापिनव्याकृतासिपदेनवाक्येनवा ॥ यतोवाचोनिवर्त्तंते
अप्राप्यमनसासहेतिश्रुतेः ॥ त्वंचविद्यात्वेनपरब्रह्मतत्त्वमेव ॥यद्वा॥ हेदेवित्वंअव्याकृतासिनकेनापिप्रकाशितासि॥परप्रकाश्यत्वानभ्युपगमाद्ब्रह्मस्वरूप
स्यस्वयंप्रकाशत्वाभ्युपगमाच्च ॥ त्वंचपरब्रह्मतत्त्वमेवस्वयंप्रकाशमनतिशयानंदचिद्रूपमसीत्यर्थः ॥ यद्वा ॥ अव्याकृताऽव्याहताकेनापिनाहिंसितासि ॥
 ॥करोतिकुरुतेदेदेसंपद्यतेक्रमादिति ॥
कृञ्हिंसायांस्वादिः ॥ त्वमेवतुयुद्धेऽहितान्व्याकृणोषिव्याहिंसि ॥ यदाहुः ॥ हिंसाकरण[illegible]
अव्याकृताहिपरमेतिपाठेतुहियस्मात् ॥ हेदेवित्वंपरमापराउत्कृष्टामालक्ष्मीःततःअःविष्णुःतेनव्याकृताउरसिस्थापितालोकेषुवा ॥ यद्वा ॥ हेदेविहियस्मा

अव्याकृताहिपरमेतिपाठेतुह्रियस्मात् ॥ हेदेविस्वंपरमापराउत्कृष्टामालक्ष्मीःततःअःविष्णुःतेनव्याकृताउरसिस्थापिताभिकुपा ॥ ...

त्वरोमकूपेपुनिजरश्मीन्दिवाकरःददौअतःत्वंअव्याकृतासिअविनासूर्येणआसमंतात्कृताते जोभिर्निर्मितासि ॥ अतएवत्वंपरमापराश्रेष्ठामातेजोऽक्षमीः॥अयमःशैलमेघार्काः ॥यद्वा॥ ह्रियतः त्वंजगतामाद्यामूलभूता ॥ अतःसृष्टेःप्राक्केवलैवेत्यव्याकृतासत्त्वरजस्तमोगुणानुदयात्तेदप्रत्ययानुदयात्सत्वा दिनाअपृथक्कृतासांख्यदर्शनप्रसिद्धापरमाप्रकृतिःप्रधानाख्यासि ॥ इयंदेवीसांख्यमतेप्रकृतिराख्यातावेदांतिनस्तुतामनिर्वचनीयामात्ममायामनादिमविद्यामाहुः ॥ शाब्दिकास्तांवस्तुतत्त्वावसितिसिद्धिभेदामाहुः ॥ शैवास्तांशिवशक्तिसंसक्तिमाहुः ॥ वैष्णवाःविष्णुमायांतामाहुः ॥ शाक्तास्तुतांमहामायामनादिमाहुः ॥ पौराणिकाःतांदेवीमाहुः ॥ ७ ॥ सुरऐश्वर्ये ॥ सुरंतिसुराःसुराणांभावःसुरतासास्तियेषांतेसुरताःइंद्रादयः ॥ मत्वर्थेऽर्शआदित्वादच् ॥ हेदेविसावैप्रसिद्धा स्वाहात्वमेवासियस्याःसमुदीरणेनसकलेषुमखेषुयज्ञेषुसमस्तसुरताःयज्ञभुजःतृप्तिंप्रयांति ॥ समस्ताश्चतेसुरताश्च समस्तविबुधाइतियावत् ॥

यस्याः समस्तसुरताः समुदीरणेनतृप्तिंप्रयांतिसकलेषुमखेषुदेवी ॥ स्वाहासिवैपितृगणस्यचतृप्तिहेतुरुच्चार्यसेत्वमतएवजनैः स्वधाच ॥ ८ ॥ यामुक्तिहेतुरविचिंत्यमहाव्रतात्वमभ्यस्यसेसुनियतेंद्रियसत्त्वसारैः ॥ मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासिसाभगवतीपरमाहिदेवि ॥ ९ ॥ ॥छ॥ ॥छ॥

किंचवैप्रसिद्धास्वाहाचत्वमेवासिअतएवखलुपितृयज्ञेपुजनैःश्राद्धकृद्भिःपुरुषैःपितृगणस्यतृप्तिहेतुः ॥ स्वधेत्येवंरूपंमंत्रात्मासतीत्वमेवोच्चार्यसेकथ्यसे ॥ दैवेश्राद्धेभवेत्स्वाहापित्र्येश्राद्धेस्वधोच्यते ॥ स्वाहादेवहविर्दानेश्रौषड्वौषट्वषट्स्वधेत्यभिधानेतुविभागोनाश्रितः ॥ ८ ॥ हेदेविहिनिश्चयेनयामुक्तिहेतुःअचिंत्यमहाव्रतापरमावेदांतोद्भवब्रह्मतत्त्वावगतिरूपसाक्षात्काररलक्षणाविद्यासिभगवतीसुनियतेंद्रियतत्त्वसारैर्मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैरभ्यस्यसे पुनःपुनरावर्त्यसेशिक्ष्यसेइत्यन्वयः ॥ मुक्तिरमृतंकैवल्यं । ज्ञानादेवतुकैवल्यमित्यभ्युपगमात् ॥ मुक्तिहेतुर्विद्याअविचिंत्याचिंतुयितुमशक्या ॥ दुस्तराणिमहांतिव्रतानिउपवासादीनियस्यांसाचिंत्यमहाव्रताअभ्यस्यसे ॥ असुक्षेपणेऽभिपूर्वःकर्मणिलटःथासःसे ॥ सुष्ठुनियतानिविषयेभ्योव्यावर्तितानींद्रियाणियैःतेचतेतत्त्वसाराश्चतत्त्वंतत्त्वज्ञानंसारंनान्यंयेषांतेतत्त्वसाराः ॥ मन्यंतेमुनयःतैः मोक्षमर्थयंतेमोक्षार्थिनःअस्तःनष्टःसमस्तदोषःकामादिरूपोयै

षांतेऽस्तसमस्तदोषाःतैः विद्यतेज्ञायंतेनयाविद्याभगवतीसर्वैश्वर्यसंपन्नापरमाउत्कृष्टा ॥ ९ ॥ हेदेविभगवतीऐश्वर्यादिसंपन्नाशब्दात्मिकावर्णपदवाक्यरू
पवाणीस्वरूपा ॥ सुविमलर्ग्यजुषांउद्गीथरम्यपदपाठवतांसाम्नांचनिधानंसर्वजगतांआर्तिहंत्रीपरमाउत्तमाचतुर्वर्गदर्शिनीवार्त्तावृत्तांतरूपात्रय्यसि वेदा
नांत्रयीभवसीत्यन्वयः ॥ अथवाभगवतीत्वंसर्वजगतांभवभावनायसंसृत्युत्पादनायपरंनिधानमाश्रयः स्थानमसि ॥ त्वंआर्तिहंत्र्यसि ॥ त्वंवार्तासिकृ
षिगोरक्षादिवृत्तिरसि ॥ त्वंशब्दात्मिकानादरूपासि ॥ यद्वा ॥ वर्णपदवाक्यरूपासिगद्यपद्यात्मिकासि ॥ हेदेवि त्वं सुविमलानिऋग्भिःसहितानियजूंषि
तेषां ॥ ऋचःऋग्वेदाःयजूंषियजुर्वेदाः तेषांसाम्नांसामवेदानांचत्रय्यसीत्यन्वयः ॥ वेदशाखानांबाहुल्याद्बहुवचनं ॥ उद्गीथउद्गीतंअतएवरम्यपदपाठवतां
उद्गीथरम्याणिपदानितैःकृत्वापाठवतां अन्यथापदानांपाठःपदपाठःउद्गीथेनरम्यःपदपाठोयेषांतानिउद्गीथरम्यपदपाठानिसामानीतिस्यात् ॥उद्गीथःप्रणव
इतिक्षीरतरंगिणीकारोव्याख्यत् ॥ उद्गीथःसामवेदःइत्यौणादिवृत्तिकारः ॥ प्रणवपक्षेउद्गीथरम्यताऋग्यजुषाणामप्यस्ति ॥ यद्वा ॥ उद्गीथउद्गीतंसाम्निप्र

शब्दात्मिकासुविमलर्ग्यजुषांनिधानमुद्गीथरम्यपदपाठवतांचसाम्नां॥ देवीत्रयीभगवतीभवभावनायवार्त्तासिसर्व
जगतांपरमार्त्तिहंत्री ॥१०॥ मेधासिदेविविदिताखिलशास्त्रसारादुर्गासिदुर्गभवसागरनौरसंगा ॥ श्रीःकैटभारिहृ
दयैककृताधिवासागौरीत्वमेवशशिमौलिकृतप्रतिष्ठा ॥ ११ ॥ ॥छ॥ ॥छ॥

सिद्धं वार्त्तावृत्तौजनश्रुतौ ॥ वृत्तिःकुसीदपाशुपाल्यवाणिज्याख्या ॥ जनश्रुतिर्वृत्तांतः। स्त्रियामृक्सामयजुषीइतिवेदास्त्रयस्त्रयी॥ऋचःयजूंषिचऋग्यजुषा
णि अचतुरादिनासमासांतः ॥ इहतुसमासांतविध्यनित्यत्वमाश्रितं॥सुविमलानिऋग्यजूंषियेषां ॥यद्वा॥ समासांतरमुक्तमेव॥भवभावनाय भवःशिवःपर
मात्मायस्यभावनंध्यानंतस्मैप्रवृत्तात्रयीत्वमेवासीत्यर्थः॥ उग्रेजन्मनिकल्याणेप्राप्तौसंसृतिसत्तयोःभवः आर्त्तिहंत्रीति जनिकर्तुःप्रकृतिरितिनिर्देशात्समास
सिद्धिः ॥ आर्तिःपीडाधनुःकोट्योः॥आङ्पूर्वताक्वचित् ॥१०॥हेदेवि त्वं मेधासि अतएवत्वंविदिताखिलशास्त्रासि ॥ यद्वा ॥ हेदेवित्वंविदिताखिलशास्त्रसा
रामेधासि ॥ धीर्धारणावतीमेधा॥ विदितास्त्वखिलानिशास्त्राणिसाराणिचतुर्वर्गतत्त्वपराणिन्यायस्यानिययामेधयासात्वमेवासि ॥ प्रवृत्तिर्वानिवृत्तिर्वानित्येन ॥१५४॥
कृतकेनवा ॥ पुंसयिनोपदिश्येतत्तच्छास्त्रमभिधीयते ॥ हेदेवित्वमसंगासंत्यक्ताखिलबंधहेतुः अप्रतिबंधाऽनिवारितगतिः॥ दुर्गादुःप्रापा दुःखेनगम्यमाना

कृतकेनवा ॥ पुंसायनापादेश्यततच्छाद्मभिधीयते ॥

दुर्गंभयसागरनौरसि दुर्गोदुस्तरोभयःसंसारःसागरइवतस्मनौःतरणिरसि ॥ यद्वा ॥ दुर्गंदुस्तरंभयंयस्मिन्स्तिदुर्गभवसा नयिवतेगरोविषंदुःखं
दुर्गा ॥ दुर्गंभयसागरनौरसि दुर्गोदुस्तरोभयःसंसारःसागरइवतस्मनौःतरणिरसि ॥ यद्वा ॥ त्वंदुर्गेदुर्गमेदुःप्रापेभवेशंभौपरब्रह्मभूतत्वेसागरेसामृतेविषयेअसंगाराग
यत्रसाअगरा अगराचासौनौश्चेतिअगरनौः दुर्गभवसाचासौअगरनौश्च ॥ यद्वा ॥ हेदेवित्वंकैटभारिहृदयैककृताधिवासाश्रीरसि विष्णुवक्षस्थलनिवासिनी
दिरहितादुर्गादुःप्रापानौरासि ॥ नौरिवनौर्देवीब्रह्मप्राप्तिसाधनविद्यारूपेत्यर्थः ॥ हेदेवित्वमेवशशिमौलिकृतप्रतिष्ठागौरीउमासि ॥ शशीचंद्रःमौलौकिरीटेयस्यसशंभुःतेनकृताप्रतिष्ठाऽवस्थितिरर्द्धशरीरभाक्त्वेनय
लक्ष्मीःत्वमेवासि ॥ हेदेवित्वमेवशशिमौलिकृतप्रतिष्ठागौरीउमासि ॥ शशीचंद्रःमौलौकिरीटेयस्यसशंभुःतेनकृताप्रतिष्ठाऽवस्थितिरर्द्धशरीरभाक्त्वेनय
स्याःसा ॥ चूडाकिरीटंकेशाश्चसंयतामौलयस्त्रयः ॥ ११ ॥ ईषत्सहासंमंदस्मितोपेतंरुचिरंपरिपूर्णचंद्रबिंबानुकारिपूर्णेंदुबिंबोपमंकनकेषुउत्तमंयत्कनकंत
स्येवकांतिःशोभायस्यतत् अतएवकांतंमनोहरं एवंभूतंतववक्त्रकमलंजगन्मोहनंजयति तथापितद्विलोक्यसहसाऽतर्कितंआत्तरुषाप्राप्तकोपेनमहिषासुरे
णप्रहृतंअत्यद्भुतमेतत् ॥ अहोईदृशंजगन्मोहंजगत्संजीवनंवक्त्रंविलोक्यपुमानानंदमाप्नुयात्तत्कथंमहासुरःसंजातकोपःप्राहार्षीदितिभावः॥अतर्कितेतुस

ईषत्सहासममलंपरिपूर्णचंद्रबिंबानुकारिकनकोत्तमकांतिकांतं ॥ अत्यद्भुतंप्रहृतमात्तरुषातथापिवक्त्रंविलोक्यसह
सामहिषासुरेण ॥ १२ ॥ दृष्ट्वातुदेविकुपितंभृकुटीकरालमुद्यच्छशांकसदृशछवियन्नसद्यः ॥ प्राणान्मुमोचमहिषस्तद
तीवचित्रंकैर्जीव्यतेहिकुपितांतकदर्शनेन ॥ १३ ॥ ॥छ॥ ॥छ॥

हसाऽव्ययं ॥ सहसाबलेनवा ॥ सहोबलंसहामार्गः ॥ सहतेसहः ॥ अनव्ययत्वेसहसाकृतमित्योजःसहोंभस्तमसस्तृतीयायाइत्यौपपदिकमलुग्विधानंचा
वगमकं ॥ अद्भुतं अदिभुवोडुतच् ॥ अदित्याश्चर्येऽव्ययं ॥ आत्तारुट्क्रुधयेनसतेन ॥ १२ ॥ हेदेविकुपितंक्रोधाविष्टंभृकुटीकरालं भृकुट्याकरालंविषमंभ
यंकरंअतएवक्रोधताम्रंउद्यच्छशांकसदृशच्छवि उद्यन्उदयंकुर्वन् शशांकश्चंद्रःआरक्तःपूर्णश्चतेनसदृशीछविःप्रभायस्यतत्॥ तदीयंसंग्रामोन्मुखंदृष्ट्वातुदृष्ट्वै
वमहिषासुरःसद्यःसपदिदर्शनक्षणएवप्राणान्नमुमोचनतत्याजेतियत्तदतीवचित्रं ॥युक्तोयमर्थः॥ हिनिश्चयेन ॥ कुपितांतकदर्शनेन कुपितकृतांतदर्शनेन
कैःजंतुभिःजीव्यतेनकैश्चिदपि॥जीवप्राणधारणे अकर्मकत्वाद्भावेलटियगात्मनेपदप्रथमपुरुषैकवचनमेव भावस्यैकत्वात् त्प्राणधारणंप्रकृतावंतर्भूतंइति
जीवतेदेवदत्तइतिप्रयोगेपृथक्प्राणपदंकर्मवाचिनःप्रयुज्यते अनुच्यमानेपितस्मिन्प्राणान्धारयतीतिगम्यमानत्वादतश्चजीवतिरकर्मकः ॥ भ्रुवौकुटीवभ्रु

बलवत्सुष्ठुकिमुतस्वत्यतीवचनिर्भरे ॥ कराकुटी ॥ इकोन्हस्वोऽन्योगालवस्योत्तरपदिकंन्हस्वत्वंअत्वंचवा ॥ तेनभ्रुकुटीवभ्रुकुटी ॥ करालंकुटिलं ॥ बलवत्सुष्ठुकिमुतस्वत्यतीवचनिर्भरे ॥ करा
कुटी ॥ इकोन्हस्वोऽन्योगालवस्योत्तरपदिकंन्हस्वत्वंअत्वंचवा ॥ तेनभ्रुकुटीवभ्रुकुटी ॥ करालंकुटिलं ॥ हेदेविभवतीजगतांभवायसम्पदुद्भवायस
लोदंतुरेतुंगे ॥ कृणोतिहिनस्तिकरालं ॥ १३ ॥ हेदेवित्वंप्रसीदप्रसन्नाभव ॥ परमापराउत्कृष्टामालक्ष्मीरसि ॥ हेदेविभवतीजगतांभवायसम्पदुद्भवायस
द्यःसपादिभवति ॥ भवतीत्वंकोपवती अप्रसन्नास्तितर्हिसद्यःजगतांकुलानिवंशान्समूहान्वाविनाशयति ॥ इहभगवतीतिभवशब्दप्रयोगे युष्मदस्मच्छ
ब्दान्यत्वेनशेषेप्रथमःपुरुषःविनाशयतीत्ययं ॥ वंशेवृन्देगृहेकुलं ॥ उक्तमर्थंप्रकृतेनदेवीचरितेनयोजयतिविज्ञातमित्यर्द्धेन अधुनैवविज्ञातंविदितमस्माभिः
एतत्किंयत्त्वंआइतंएतंयोद्धुमागतं ॥ सुविपुलंसुष्ठुबहुलंमहिषासुरस्यबलंसैन्यंअस्तंविनाशंनीतंप्रापितंइत्येतत् ॥ प्रसादपरमेतिपाठेप्रसादेनप्रसन्नत्वेन
परमाउत्कृष्टाचेत्तर्हिलोकानांभवायभूतयेसंपदुदयायभवति ॥ अस्तमदर्शनेअस्तमितिमकारांतमव्ययमनुपलब्धेर्थेवर्त्तते ॥असुक्षेपणइत्यतोनपुंसकेभावे
क्तेतुअस्तंप्रेरणंदूती (री) करणमन्यत्रक्षेपंनीतमित्यर्थः ॥ विनाशनीतमित्यर्थस्तुनस्यात् ॥ अस्तमित्यव्ययत्वेत्विष्टसिद्धिः ॥ १४ ॥ हेदेविभवतीसदाऽभ्यु

## देविप्रसीदपरमाभवतीभवायसद्योविनाशयतिकोपवतीकुलानि ॥ विज्ञातमेतदधुनैवयदस्तमेतन्नीतंबलंसुविपुलं महिषासुरस्य ॥ १४ ॥ तेसंमताजनपदेषुधनानितेषांतेषांयशांसिनचसीदतिबंधुवर्गः ॥ धन्यास्तएवनिभृतात्मज भृत्यदारायेषांसदाभ्युदयदाभवती प्रसन्ना ॥ १५ ॥ धर्म्याणिदेविसकलानिसदैवकर्माण्यत्याहृतः प्रतिदिनंसुकृती करोति ॥स्वर्गंप्रयातिचततोभवतीप्रसादाल्लोकद्वयेपिफलदाननुदेवितेन॥ १६॥

दयासतीयेषांप्रसन्नास्तितेएवलोकाज
नपदेषुजीवत्सुदेशेषुसंमताःलब्धप्रतिष्ठाःस्युःतेषामेवधनानिस्युःतेषामेवयशांसिसत्कीर्त्तयःस्युः॥ तेषांबंधुवर्गश्चनसीदति॥चकाराच्चतुष्पात्प्रभृतिश्चनसीद
ति॥तएवधन्याःधनेषुसाधवः ॥ यद्वा ॥ धनानिलब्धारःप्राप्तारःधन्याः॥ धनगणंलब्धेतिसूत्रेणयत्प्रत्ययः ॥ सुकृतीपुण्यवान्धन्यः॥हेदेवियेषांभवतीप्रसन्ना
स्तितएवनिभृताःविनीताःशिक्षितकुलाचाराअचपलाःआत्मजाःसुताःभृत्याःअनुचराःदाराःकुलस्त्रियश्चयेषांते ॥ निभृतविनीतप्रश्रिताःसमाः ॥ १५ ॥
हेदेविभवतीप्रसादाद्भवत्याःप्रसादात्संभावितःसुकृतीपुण्यवान्जनःप्रतिदिनंसदैवअत्याहृतःअतिशयादृतःसन्सकलानिसमस्तानिस्वशाखोक्तान्यतएव
धर्म्याणिधर्मेणप्राप्यणिधर्मादनपेतानियथायथंश्रौतानिस्मार्त्तानिचकरोति ॥ज्योतिष्टोमादीनिहिस्वर्गकामःकरोतिततश्चसस्वर्गंप्रयातितेनहेतुना हेदेविलोक

धर्म्याणि धर्मेण प्राप्यणि धर्मादनपेतानि यथायथं श्रौतानि स्मार्तानि च करोति ॥ज्योतिष्टोमादी॥ निहस्वर्गकाम...

द्येयपि भुवि दिव्य पित्र्यमेव फलददासि ॥ ननु दर्शदंदृस्थमेव ॥ प्रश्नाय धारणानुज्ञानुनयामंत्रणेननु ॥ नीयमोधर्मेति धर्मेण प्राप्यानां स्वर्गदत्त स्वयः ॥ यद्वा ॥ धर्मेव
ध्यर्थन्यायादनपेतेयत् ॥ अत्याहतीसादरार्चितौ॥ ननु च भवती प्रसादादित्यत्र सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावो भवतीति भवत्प्रसादादिति स्यात्तत्राह ॥
पुंवदिति योगविभागसाध्यमिदं पुंवत्वं क्वचिदेव योगविभागादिष्टसिद्धिः॥ततश्चैकोहं भवतीसुतक्षयकरो मातः किंयंतोरयइतिवत्पुंवद्भावाभावः क्वचिदस्त्येव ॥
पुंवदिति योगविभागसाध्यमिदं पुंवत्वं क्वचिदेव योगविभागादिष्टसिद्धिः॥ततश्चैकोहं भवतीसुतक्षयकरोमातः किंयंतोरयइतिवत्पुंवद्भावाभावः क्वचिदस्त्येव ॥
भवतीति तुच्छित्वा प्रसादात्प्रसन्नत्वाद्भवती लोकद्वयेपि फलदास्ति इति पुंवत्वशंकानिरासपरव्याख्यानेभवतीसुतक्षयकर इतिप्रयोगः कदर्थितः स्यात् ॥ १६॥
हेदुर्गेभीतस्याशेषजंतोः सर्वस्यापि प्राणिनः स्वांतेन स्मृता सती त्वं भीतिं हरसि ॥ हेदुर्गेत्वं स्वस्थैरभीतैस्तु जंतुभिः स्मृता सती अतीवशुभां मतिं चतुर्वर्गफलसाव
नभूतां बुद्धिं ददासि ॥ त्वन्मंत्रत्वद्ध्यानत्वद्भजनपरां मतिं वा ददासि॥ तदित्थं हेदारिद्र्यदुःखभयहारिणि सर्वोपकारकरणाय सर्वोपकारान् कर्त्तुं सदा आर्द्रचित्ता
कृपार्द्रहृदया परा देवता त्वदन्या कास्तु न कापि॥ अन्यादितो भयं हर्त्तुं मतिं दातुमनुत्तमां "देवि त्वदपरा कास्तु सर्वोपकृतिकारिणी ॥ दुःखेन गंतुं शक्यते स्यां दुर्गा सु

दुर्गेस्मृताहरसिभीतिमशेषजंतोः स्वस्थैः स्मृतामतिमतीवशुभां ददासि ॥ दारिद्र्यदुःखभयहारिणि कात्वदन्या सर्वो
पकारकरणाय सदार्द्रचित्ता ॥ १७ ॥ एभिर्हतैर्जगदुपैतु सुखं तथैते कुर्वंतु नाम नरकाय चिराय पापं ॥ संग्राममृत्युम
धिगम्य दिवं प्रयांतु मत्वेति नूनमहितान्विनिहंसि देवि ॥ १८ ॥ ॥छ॥ ॥छ॥

दुरोरधिकरणे चेतिडः ॥ बलवत्सुष्ठुकिमुतस्वत्यतीव च निर्भरे ॥ स्वस्थैः स्वर्गस्थैर्देवैः स्मृतेति वा दरिद्रा दुर्गतौ ॥ दरिद्राति दुर्गच्छति निर्द्धनी भवतीति दरिद्रः ॥द्र
रिद्रस्य कर्म दारिद्र्यं तस्य दुःखं दारिद्र्यदुःखं तस्माद्भयं हरतीति तच्छीला तस्याः संबुद्धिः हेदारिद्र्यदुःखभयहारिणि सर्वेषु भक्तेषु अभक्तेषु उदासीनेषु च उपकाराणां
करणं विधानं तस्मै॥ १७ ॥यद्येषा देवी सर्वोपकारकरणाय दयार्द्रचित्ता स्यात्किमिति हि दैत्यान्निहंतीति तत्रोत्तरमाह उपैतु लोडंतः पाठः ॥ नांबइति पाठे नअंबइ
तिच्छेदः हेअंब हे सर्वजननि त्वं सर्वोपकाराय सदाकृपार्द्रचित्तासीतियत्तत्तथैव नान्यथा ॥ तथा हि ॥ एभिरहितैर्महिषासुरादिभिर्हतैः रणे त्वद्धतैः जगत् लोकः
सुखं उपैतु पीडकाभावात्सुखं प्राप्नोतु॥तथा एते अहिता लोकत्रयद्रुहो महिषासुरादयः चिराय नरकाय नरकं गंतुं पापं न कुर्वंतु किंतु संग्रामे मृत्युं मरणमधिगम्य प्रा
प्य दिवं स्वर्गं प्रयांतु इति मत्वा विचिंत्यानुग्रहबुद्ध्या एतान्दैत्यान् विनिहंसि न्यवधीः ॥ ततोन्यानपि दैत्यान्विनिहनिष्यसि ॥ सिप् वर्त्तमानसामीप्ये वर्त्तमानव

ह्वेतिलट् ॥ नूनमवश्यं ॥ नूनमवश्यंनिश्चयेद्वयं ॥ चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाःअव्ययाख्याः ॥ अंबेतिअंबार्थनद्योर्ह्रस्वः॥ नामेत्यत्रपाठे न आम
नरकायकुष्ठादिमहाव्याधिप्रधाननरकायपापंनकुर्वीत्वित्यर्थः ॥ अथवानामप्रकाश्यसंभाव्यक्रोधोपगमकुत्सने ॥ एभिरसुरैर्ईदृशैर्जगत्सुखमुपैतुतथैतेऽसुराः
नरकायकुष्ठादिमहाव्याधिप्रधाननरकायपापंनकुर्वंत्वित्यर्थः ॥ १८ ॥ हेदेविभवतीसर्वासुरान्सर्वेषामपिअसून्प्राणान्रांति गृह्णंतितान्असु
यद्यपिपापंकृतवंतःकुर्वंतुनामचिरायचिरकालंतथावधेनोद्धरणीयाइत्यर्थः ॥ अथापिहिहेदेवित्वमरिषुशत्रुषुशस्त्रमायुधंप्रहिणोषिप्रयुंक्षेइतियत्तत्रतवा
रान्दृष्ट्यैवक्रूरदृष्ट्यैवभस्मभस्मीभूतान्किंनप्रकरोति किंतुसामर्थ्यतःकरोत्येव ॥ अथापिहिहेदेवित्वमरिषुशत्रुषुशस्त्रमायुधंप्रहिणोषिप्रयुंक्षेइतियत्तत्रतवा
भिप्रायोन्यएवहिनिश्चयेनरिपवोपिशत्रवोपिशस्त्रपूताःशस्त्रहताःकृतप्रायश्चिताइवशमितपापफलाःसंतोलोकान्स्वर्गादीन्प्रयांत्विति ॥ तदित्थं॥हेदेवितवते
ष्वहितेष्वपिसाध्वीमतिरनुग्रहबुद्धिर्भवतिकिंपुनःसाधुषुस्वधर्मनिरतेषुसाध्वीतवमतिर्भवतीतिकिंब्रूमइतिभावः ॥भवतीशब्दप्रयोगेप्रकरोतीतिप्रथमपुरुषः
भस्मत्वस्यविधेयत्वादेकत्वेपिनविरोधो वेदाःप्रमाणमितिवत् ॥ प्रहिणोतीति हिगतौ ॥ स्वादिभ्यश्नुः हिनुमीनाइतिणत्वं ॥ लोकस्तुभुवनेजने ॥ साध्वी

दृष्ट्यैवकिंनभवतीप्रकारोतिभस्मसर्वासुरानरिषुयत्प्रहिणोषिशस्त्रं ॥ लोकान्प्रयांतुरिपवोपिहिशस्त्रपूताइत्थंमतिर्भ
वतितेष्वहितेषुसाध्वी ॥१९॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैःशूलाग्रकांतिनिवहेनदृशोसुराणां ॥ यन्नागताविल
यमंशुमदिंदुखंडयोग्याननंतवविलोकयतांतदेतत् ॥२०॥ वोतोगुणवचनान्ङीप् ॥१९॥ हेदेविरणेतवउग्रैःखड्गप्रभानिकरैर्विस्फुरणैः

तथाउग्रेणशूलाग्रकांतिनिवहेनवाअसुराणांदृष्ट्यःविलयंविनाशंनागताःनअगमन्इतियत्तदेतदन्यदेवास्तिकारणंकिं ॥ अंशुमदिंदुखंडयोगिआननंसुधांशुखं
डयुक्तंतववक्त्रंविलोकयतांइतिहेतुगर्भविशेषणमसुराणां ॥ यद्यमीअसुरारणेदेव्याअमृतांशुखंडयुक्तमाननंनविलोकयेयुःतर्हिउग्रैःखड्गप्रभानिकरविस्फुरणैःशू
लाग्रकांतिनिवहेनचविलयंगतदृशःसंपद्येरन्निितिभावः ॥ अत्रक्रियातिपत्तिर्वर्त्तते यथा॥हेदेवियद्यसुराः तवामृतांशुखंडयुक्तंमुखंव्यलोकयिष्यन्तर्हिउग्रैःखड्ग
प्रभानिकरविस्फुरणैःशूलाग्रकांतिनिवहेनचविलीनदृशःसमपत्स्यंत॥ नचतदेतत्समपत्स्यंत ॥ यद्यस्मान्मुखंव्यलोकयिष्यन्तस्मादसुराविलीनदृशोनसमप
त्स्यंतेति ॥ खड्गस्यप्रभाःतासांनिकरःस्तोमः तस्यविस्फुरणानि तैः ॥ शूलस्याग्राणि तेषांकांतयःतासांनिवहःसमूहः तेन ॥ अंशवः
किरणाः ॥ इंदुरमृतमयूखःतस्यखंडःशकलःतेनयोगःसंबंधःतद्वत् ॥ अंशुमदिंदुखंडेनयोक्तुमर्हैयोग्यंआननंइत्यपिशब्दः सवर्णदीर्घः ॥ २० ॥

किरणाः ॥ इंदुरमृतमयूखः तस्यखंडः शकलः तेनयोगः संबंधः तद्वत् ॥ अंशुमांदिंदुखंडेनयोकुमहेयो...

हेदेवितवशीलंसद्वृत्तंकर्तृ दुर्वृत्तवृत्तशमनं दुष्टंवृत्तंयेषांतेदुर्वृत्ताः तेषांशमनंशमयितृनिवारकंवर्त्तते ॥यद्वा॥दुष्टेनवृत्तेनवृत्तंनिष्पन्नंफलंदुर्वृत्तवृत्तंदुष्टफलंनरकफल हेदेवितवशीलंसद्वृत्तंकर्तृ दुर्वृत्तवृत्तशमनं दुष्टंवृत्तंयेषांतेदुर्वृत्ताः तेषांशमनंशमयितृनिवारकंवर्त्तते ॥यद्वा॥ ...मनोहरंरतुल्यमसदृशंअ क्षणंतस्यशमनं तवशीलं॥ तथाहेदेवितवैतत्सर्वसौभाग्यसौंदर्यभाजनंरूपमचिंत्यंमनसापिविचारयितुमशक्यंअविचार्यसत्अन्यैर्मनोहरंरतुल्यमसदृशंअ क्षणंतस्यशमनं तवशीलं॥ तथाहेदेवितवैतत्सर्वसौभाग्यसौंदर्यभाजनंरूपमचिंत्यंमनसापिविचारयितुमशक्यंअविचार्यसत्अन्यैर्मनोहरंरतुल्यमसदृशंअ साधारणमसमानंवर्त्तते ॥ तथाहेदेवितववीर्यंचहृतदेवपराक्रमाणांदैत्यानांहंतृघातकंवर्त्तते ॥ तथाहेदेविइत्थंप्रागुक्तभणित्यात्वयास्वकीयादयावैरिष्वपिप्र कटितैवप्रकाशितैव ॥ वृत्तंपद्ये चरित्रेत्रिष्वतीतेदृढनिस्तले ॥ शीलंस्वभावेसद्वृत्ते ॥ रूपंगुणेस्वभावेच ॥२१॥ हेदेविवरदेभुवनत्रयेपितेतवास्यपराक्रमस्य केनसहउपमाभवतुनकेनापि ॥ निरुपमत्वात्तेपराक्रमस्य ॥ नन्वतुलोपमाभ्यांइतितिंनिषेधात्तृतीयानस्यात् ॥ सहाविवक्षायांतृतीयास्त्येव ॥ सूत्रंतुषष्ठ्यर्थंस हभावाविवक्षार्थंच ॥ हेदेविरूपंचशत्रुभयकारि शत्रूणांभयोत्पादनशीलं ततोन्येषांतुअतिहारिअतिमनोहारितवैवास्तिनत्वन्यस्य॥ त्वदीयचित्तेकृपाचसम

दुर्वृत्तवृत्तशमनंतवदेविशीलंरूपंतथैतदविचिंत्यमतुल्यमन्यैः ॥ वीर्यंचहंतृहृतदेवपराक्रमाणांवैरिष्वपिप्रकटितैवद यात्वयेत्थं ॥२१॥ केनोपमाभवतुतेस्यपराक्रमस्यरूपंचशत्रुभयकार्यतिहारिकुत्र ॥ चित्तेकृपासमरनिष्ठुरताचदृष्टा त्वय्येवदेविवरदेभुवनत्रयेपि ॥ २२ ॥ त्रैलोक्यमेतदखिलंरिपुनाशनेनत्रातंत्वयासमरमूर्द्धनितेपिहत्वा ॥ नोता दिवंरिपुगणाभयमप्यपास्तमस्माकमुन्मदसुरारिभवंनमस्ते ॥ २३ ॥ ॥छ॥ ॥छ॥

रनिष्ठुरताचत्वय्येवदृष्टा नान्यत्रदृष्टेत्यर्थः॥ भवत्वितिलोट् दृष्टेतिनिष्ठा ॥ दृष्ट्वाइतिक्कांतोपपाठः ॥ कृपासमरनिष्ठुरताइतिचप्रथमानतुद्वितीया ॥ समरेनि ष्ठुराया भावः ॥ त्वतलोर्गुणवचनस्यपुंवद्भावः ॥ २२ ॥ हेदेवित्वयाएतत्त्रैलोक्यंरिपुनाशनेनातुलंयथाभवतितथात्रातंरक्षितं ॥ त्रैङ्पालने नुदविदोंदत्राघ्रा ह्रीभ्योन्यतरस्यांइतिवानिष्ठानत्वं ॥ त्वयासमरमूर्द्धनिरिपुगणान्हत्वातेरिपुगणाःदिवंस्वर्गंनीताः ॥ हेदेवित्वयाऽस्माकंदेवानांउन्मदसुरारिभवंभयमप्य पास्तंअपक्षिप्तंदूरीकृतं ॥ हेसर्वजननिनमस्ते॥लोकेखलुहिताःनतिमर्हंति ॥ त्रयोलोकाःत्रैलोक्यंचातुर्वर्ण्यादित्वात्स्वार्थेष्यञ् ॥ अखिलंत्रैलोक्यमितिपाठेपौ नरुक्त्यभियानवियतेखिलंयत्रेतिक्रियाविशेषणं ॥ संभवेव्यभिचारेचस्याद्विशेषणमर्थवत् ॥ रिपूणांनाशनेनसमरस्यमूर्द्धेवमूर्द्धायुद्धाग्रभूमिःतथाचोच्छ्रित मदेभ्यःसुराणामरिभ्योदैत्येभ्यःभवंसभवम् ॥ नमःस्वस्तीतिचतुर्थी ॥ २३ ॥ ॥छ॥ ॥छ॥

हेदेविअंबिकेत्वंशूलेनायुधेनशत्रुभ्योनोस्मान्पाहिरक्ष ॥ पारक्षणे ॥ सेर्ह्यपिच्च ॥ अस्त्रीशूलंरुगायुधं ॥ त्वंघंटायाःस्वनेननःशत्रुतःपापतश्चपाहि ॥ हेदेवित्वं चापज्यानिःस्वनेनचापारोपिताकृष्टमौर्वीजनितनिस्वनेननोस्मान्पाहिपापतःशत्रुभ्यश्चेतिशेषः ॥ २४ ॥ हेदेविईश्वरिईश्वरस्यपत्नि ॥ यद्वा ॥ हेईश्वरिज गद्व्यापिनि ॥ अश्नोतेराशुकर्मणिवरट्चेच्चोपधायाः ॥ हेचंडिकेत्वंआत्मनःशूलस्यायुधस्यभ्रामणेनपरितोभितश्चक्राकारेणपरिवर्त्तनेननोस्मान्प्राच्यांदि शिरक्षशत्रुतः ॥ त्वंप्रतीच्यांपश्चिमायांदिशिआत्मशूलस्यभ्रामणेनरक्ष ॥ त्वंआत्मशूलस्यभ्रामणेनदक्षिणेदिग्विभागे तथाउत्तरस्यांदिशिरक्ष ॥ भ्रमण स्येदंभ्रामणंप्रदक्षिणीकरणंपरितोमंडलीकरणं॥ अन्यथाचलनमात्रंशूलसमेताक्रियास्यात् ॥ अतश्चप्रदक्षिणाकृतिपरिभ्रमणंविवक्षितामितिसूचयितुंप्राच्यां प्रतीच्यांदक्षिणेउत्तरस्यांइत्युक्तं ॥ चकाराद्विदिग्ग्रहणं ॥२५॥ हेदेवित्रैलोक्येत्रिभुलोकेषुतेतवयानिसौम्यानिसुंदराणिप्रसन्नानिरूपाणिविचरंतिविहरंति ॥

**शूलेनपाहिनोदेविपाहिखड्गेनचांबिके ॥ घंटास्वनेननः पांहिचापज्यानिःस्वनेनच ॥ २४ ॥ प्राच्यांरक्षप्रतीच्यां चचंडिकेरक्षदक्षिणे ॥ भ्रामणेनात्मशूलस्यउत्तरस्यांतथेश्वरि ॥ २५ ॥ सौम्यानियानिरूपाणित्रैलोक्येविचरंतिते ॥ यानिचात्यंतघोराणितैरक्षास्मांस्तथाभुवं ॥२६॥ खड्गशूलगदादीनियानिचास्त्राणितेंबिके॥ करपल्लवसंगीनितै रस्मान्रक्षसर्वतः ॥ २७ ॥**

यानिचात्यंतघोराणिभयंकराणिरूपाणिविचरंति ॥ तैस्तैश्चरूपैरुपलक्षितात्वंतैस्तैःकरणैर्वाऽस्मा न्रक्ष ॥ तथातैरेवद्विविधैरूपैर्भुवंरक्ष ॥ चकारात्पाताललोकंरक्ष ॥ सौम्यंतुसुंदरेसोमदेवते ॥ सोमार्यणि ॥ सौम्यंसुंदरेतूपचारतः ॥ अनुगृह्णातियान्दे वीतेषांसौमीजगन्मयी ॥ नानुगृह्णातियान्देवीतेषांघोराजगन्मयी ॥ २६ ॥ हेदेविखड्गशूलगदादीनियान्यायुधानितैः यानिचास्त्राणिधनुरादीनितैश्च त्वंसर्वतःसमंततः अस्मान्त्वदेकशरणान् रक्ष दुःखतःशत्रुतश्चपालय ॥ हस्तिशुंडांशुवाहाग्रवलिपूकःकरःपुमान् ॥ करोहस्तः अंगुल्यःकरशाखाः करपल्लवाःतैःसंगःतद्वंतिकरपल्लवसंगीनि ॥ करपल्लवकरपल्लवैःतेनसंगःतद्वंतिवा हस्तस्थितानीत्यर्थः ॥ समंततस्तुपरितःसर्वतोविष्वगित्यपि ॥ ख ड्गश्चशूलंचगदाचखड्गशूलगदंसेनांगत्वादेकवत्त्वंतदादिर्येषांतानिधनुरादीनि ॥ २७ ॥



॥७॥ ॥७॥

ङ्गश्शूलंचगदाचखड्गशूलगदसेनांगत्वादेकवत्वंतदादयपातानिधनुरादीनि ॥ २७ ॥

एवमुक्तभणित्याजगतांधात्रीपोषयित्रीदेवासुरैस्स्तुताततोदिव्यैर्दीप्तिभिधैः नंदनोद्भवैःनंदनंस्यस्तनवनंततउद्भवैःकुसुमैः तथादिव्यैःगंधानुलेपनैश्चार्चितापू
जिता ॥ गंधैरनुलेपनानि गंधाःकुंकुमादयः ॥ कुंकुमागरुकस्तूरीकर्पूरंचंदनंतथा ॥ महासुंगधमित्युक्तंनाम्नास्याद्यक्षकर्दमः ॥ अनुलेपनमंगरागः ॥ २८
समस्तैरखिलैःत्रिदशैर्देवैःभक्त्यादिविभवैर्धूपराजैःसुधूपितासुपूजिता ॥ देवीप्रसादसुमुखीसतीतान्प्रणतान्समस्तान्सुरानिंद्रादीन्वाक्यंप्राहउवाच ॥
उपसर्गप्रतिरूपकःप्रशब्दोऽव्ययाख्यः ॥ अहेतिनिपातस्तिङंतप्रतिरूपःकालसामान्यवचनः ॥ शोभनंमुखमस्त्यस्याःसुमुखी ॥ स्वांगाच्चोपसर्जनादसं
योगोपधादितिचातूङीषूचटाप्च ॥ नखमुखात्संज्ञायामितिङीषोनिषेधस्तुसंज्ञायामेव ॥ २९ ॥ हेत्रिदशाःयुष्मत्कृतैरेभिःस्तवैःप्रपूजिताअहंअतिप्री
तास्मि ॥ युष्माभिरस्मत्तःसकाशाद्यदभिवांछितंअभिलषितंवर्त्ततेतद्वस्तुव्रियतांप्रार्थ्यतांअहंददामिदास्यामि ॥ इहप्रीत्याप्रीत्येतिपाठद्वयंयत्तन्मत्तोभिवां

॥ ऋषिरुवाच ॥ ॥ एवंस्तुतासुरैर्दिव्यैः कुसुमैर्नंदनोद्भवैः ॥ अर्चिताजगतांधात्रीतथागंधानुलेपनैः ॥ २८ ॥
भक्त्यासमस्तैस्त्रिदशैर्दिव्यधूपैः सुधूपिता ॥ प्राहप्रसादसुमुखीसमस्तान्प्रणतान्सुरान् ॥ २९ ॥ ॥ देव्युवाच ॥
व्रियतांत्रिदशाःसर्वेयदस्मत्तोभिवांछितं ॥ ददाम्यहमतिप्रीत्यास्तवैरेभिःसुपूजिता ॥ ३० ॥ कर्त्तव्यमपरंयच्चदु
ष्करंतन्नविद्महे ॥ इत्याकर्ण्यवचोदेव्याःप्रत्यूचुस्तेदिवौकसः ॥ ३१ ॥ ॥ देवाऊचुः ॥ ॥ भगवत्याकृतंसर्वंनकिं
चिदवशिष्यते ॥ यदयंनिहतःशत्रुरस्माकंमहिषासुरः ॥ ३२ ॥

छितमितिपाठःसभ्यः ॥ यदस्मत्तोभिवांछितमिति
पाठेअस्मद्देवीभ्यःव्रीयतांअहंददामीतिवचनचातुर्यं ॥ कीदृक्स्यात्बहुत्वेनोपक्रम्यैकत्वेनोपसंहाराद्वाचोयुक्तिरियंयुक्तिमतांउद्वेगंजनयतीत्यर्थः ॥ ३० ॥
हेदेविअपरंयुष्माभिःकर्त्तव्यंसतूदुःसाध्यंयत्तच्चमदग्रेमह्यंनिवेद्यतांज्ञाप्यतांतदप्यपरंमहिषासुरवधापेक्षयाद्वितीयंकार्यंसाधयामिइतिभावः ॥ इतिइत्थंदेव्या
वचः आकर्ण्यश्रुत्वातेसर्वेदिवौकसःइंद्रादयःप्रत्यूचुःप्रतिवाक्यमुक्तवंतः दिविओकोनिवासोयेषांतेदिवौकसः ॥ पृषोदरादित्वात्साधुः ॥ ३१ ॥ हेदेवियं
यस्मात्त्वयाअस्माकंशत्रुरयंमहिषासुरोनामनिहतः अतःत्वयासर्वमस्माकंप्रयोजनंकृतमेव ॥ नकिंचिदवशिष्यते ॥ नकिंश्चिदपिशत्रुरवशिष्टः ॥ ३२ ॥

हेमहेश्वरिदेवियदिपक्षांतरेत्वयाऽस्माकंत्वदनुग्रहजीविनांबरः देयोनुमतःस्यात्तर्हिवरःप्रार्थ्यतेऽस्माभिःकोसौ हेदेवित्वंपरमापत्सुअस्माभिःत्वदेकशरणैः संस्मृतासंस्मृतासतीवारंवारंध्यातानोस्माकंपरमापदः॥यद्वा॥परमाअत्यर्थाआपदःयेभ्यःतेपरमापदःशत्रवः तान्महासुरान्हिंसीथाःहिंस्याःहिंसिहिंसायां रुधादेःप्रार्थनेलिङ्चपरस्मैपदस्थानेव्यत्ययोबहुलंइत्यात्मनेपदस्यथासःसीयुट्॥अस्माकंइतिदानप्रतिग्रहभावाभावात्संबंधेषष्ठ्यैव ॥रजकस्यांशुकंदत्तेस्वामीभृत्यस्यवेतनमितिवत् ॥ पक्षांतरेचेयादिच ॥३३ ॥ देवाःद्वितीयंवरंप्रार्थयंते ॥ हेदेविहेअंबिकेअमलाननेप्रसन्नवदनेत्वंअस्माभिः प्रपन्नाप्रणतासेवितासतीवरदासिअतोयश्चमर्त्यःएभिस्त्वद्विषयैरस्माभिर्देवैःकृतैःस्तवैःत्वांदेवींस्तोष्यतिभक्तितःस्तविष्यतितस्यमर्त्यस्यमनुष्यस्यवित्तर्द्धिविभवैःसहधनदारादिसम्पदांसदावृद्धयेभवेथाः ॥ सर्वदावित्तस्यऋद्धेःसमृद्धेःविभवैरुद्भवैःसहधनस्यगोमहिष्यस्याश्वादेर्दाराणांपत्नीनांआदिशब्दात्सेवकानांसम्पदांक्षेत्रारामधान्य

यदिचापिवरोदेयस्त्वयास्माकंमहेश्वरि॥संस्मृतासंस्मृतात्वंनोहिंसीथाःपरमापदः ॥३३॥यश्चमर्त्यस्तवैरेभिस्त्वां स्तोष्यत्यमलानने ॥ तस्यवित्तर्द्धिविभवैर्धनदारादिसंपदां॥ वृद्धयेस्मत्प्रपन्नात्वंभवेथाःसर्वदांबिके ॥३४॥ ऋषिरुवाच ॥ इतिप्रसादितादेवैर्जगतोर्थेतथात्मनः ॥ तथेत्युक्त्वाभद्रकालीबभूवांतर्हितानृप ॥३५॥ इत्येतत्कथितंभूप संभूतासायथापुरा॥ देवीदेवशरीरेभ्योजगत्त्रयहितैषिणी॥३६॥पुनश्चगौरीदेहात्सासमुद्भूतायथाभवत्॥वधायदुष्टदैत्यानांतथाशुंभनिशुंभयोः ॥ ३७॥ ॥छ॥ ॥छ॥

पुत्रमित्रादिसम्पत्तीनांचवृद्धयेभवेथाः प्रार्थनेलिङ् व्यत्ययोबहुलंइत्यात्मनेपदं ॥ यद्यपिवित्तंधनंइतिपर्यायस्तथाप्युपचाराद्गवाश्वादिकंधनशब्देनविवक्षितं वित्तर्द्धयश्चविभवाश्चऐश्वर्याणितैःसहितंधनंगवादिदारादिपत्न्यादियेषांसम्पदः तासां ॥ ३४ ॥ हेनृपसुरथइतिप्रागुक्तरीत्यादेवैर्जगतोर्थेत्रैलोक्यसंरक्षणप्रयोजनायतथात्मनोर्थेस्वार्थेदेवकार्यार्थेचविषयेप्रसादिताप्रसादसुमुखीकृताभद्रकालीभद्रासर्वमंगलाकालीरुद्रपत्नी कर्मधारयः ॥ हेदेवाः तथास्तुयुष्मद्वांछितंवस्तुसिध्यात्वित्युक्त्वांतर्हिताऽभवत् अदृश्याबभूव ॥ ३५ ॥ हेभूपजगत्त्रयहितैषिणीसादेवीदेवशरीरेभ्योयथापुरापूर्वंतेजोरूपासंभूतामहिषासुरवधाय प्रादुरभूदित्येतत्सर्वंतेतुभ्यंमयाकथितं ॥ ३६ ॥ ३७ ॥ श्लोकद्वयमेकान्वयं ॥ ॥छ॥ ॥छ॥

प्रादुरभूदित्येतत्सर्वंतेतुभ्यंमयाकथितं ॥ ३६ ॥ ३७ ॥ श्लोकद्वयमेकान्वयं ॥ ॥छ॥

शृणु स्वेतिपदद्वयं ॥ इत्यआत्मीयसुरथसाम्प्रसिद्धादेवानां उपकारिणीदेवी पुनश्चदुष्टदैत्यानांधूम्रलोचनचण्डमुण्डादीनांवधायच तथाशुंभनिशुंभवधायभाव लोकानांरक्षणायचगौर्यदिहात्समुद्भूताऽभवदासीत् तत्सर्वंयथावद्यथार्थंयावत्तेतुभ्यंकथयाम्यहंयथावद्यावत्प्रकारेणाख्यातंमयाकथितंशृणु ॥ शृणुत्वेतिपा ठेव्यत्ययोबहुलंइत्यात्मनेपदं ॥ शुंभभाषणेहिंसायांचभ्वादिः ॥ शुंभतिभाषतेहिनस्तिवाशुंभः दंत्यादिरयं (१) ॥ तालव्यादिपाठेतुशुभशुंभशोभार्थे तुदादिः ॥ शुंभतिशोभतेरणेष्वितिशुंभः ॥ यथाप्रकारवद्यथावत्क्रियाविशेषणं ॥ ३८ ॥ इतिश्रीमद्राजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशंतनुविरचि तायांशांतनव्यांदेवीमाहात्म्यटीकायांशक्रादिस्तुतिरेकाशीतितमोऽध्यायः ॥ ८१ ॥ ॥छ॥ हेराजन्पुरापूर्वस्मिन्कल्पेशुंभनिशुंभाभ्यामसुराभ्यांद्वाभ्यां कर्तृभ्यांमदबलाश्रयात्मदेनगर्वेणसहितंबलंसामर्थ्यंयस्याश्रयणंतस्माद्धेतोः शचीपतेरिंद्रस्यइन्द्राद्वासकाशात्त्रैलोक्यंहृतंगृहीतं यज्ञभागाश्चहृताःयज्ञवि

रक्षणायचलोकानांदेवानामुपकारिणी ॥ तच्छृणुस्वमयाख्यातंयथावत्कथयामिते ॥ ३८ ॥ इतिमार्कंडेयपुराणेदेवी माहात्म्येएकाशीतितमोध्यायः ॥ ८१ ॥ ॥छ॥ ऋषिरुवाच ॥ पुराशुंभनिशुंभाभ्यामसुराभ्यांशचीपतेः॥त्रैलौक्यं यज्ञभागाश्चहृतामदबलाश्रयात् ॥ १ ॥ तावेवसूर्यतांतद्वदधिकारंतथैंदवं ॥ कौबेरमथयाम्यंचचक्रातेवरुणस्यच ॥ ॥ २ ॥ तावेवपवनर्द्धिंचचक्रतुर्वह्निकर्मच ॥ अन्येषांचाधिकारान्सःस्वयमेवाधितिष्ठति ॥ ततोदेवाविनिर्धूताभ्रष्टरा ज्याःपराजिताः ॥ ३ ॥ ॥छ॥ ॥छ॥ ॥छ॥

धिविहृतिहारा ॥ हर्षेगर्वेमदेक्षैब्येगजदानेचकीर्तितः ॥ स्थौल्यसामर्थ्यसैन्येषुबलंनाकाकसीरिणोः ॥ १ ॥ तौशुंभनिशुंभावेवकामरूपत्वात्सूर्यरूपतां चक्रातेसूर्याधिकारहरणात्सूर्यभावमिव ऐंदवंइन्दुसंबंधिनमधिकारमाधिपत्यंतावेवचक्राते ॥ तथातावेवकौबेरसंबंधिनमधिकारंचक्राते॥ तावेवयाम्यंयमा धिकारं तथातावेववरुणस्याधिकारंचक्राते ॥ याम्यंइतिदित्यदित्यादित्यपत्युत्तरपदाण्ण्यइत्यत्रप्राग्दीव्यतीयेष्वर्थेष्युयमाच्चेतिवक्तव्यमितिण्यः ॥ सूर्याद्य धिकारान्तावेवाग्रहीष्टामित्यर्थः ॥ २ ॥ तावेवासुरौपवनस्यवायोर्ऋद्धिमस्खलितगतिंऐश्वर्यंचक्रतुः ॥ तथातावेववह्नेः कर्मव्यापारंचक्रतुः ॥ तावेवान्येषां दिवौकसांदेवानांअधिकारानग्रहीष्टं ॥ इदमर्थकाप्येवदृश्यते ॥ ततःताभ्यामसुराभ्यांसकाशतःपराजिताः प्राप्तपराभवाः अतएवभ्रष्टराज्याः भ्रष्टाधि

कारादेवाविनिर्द्धूताःस्वर्गाद्दूरीकृताआसन् ॥ ताभ्यामसुराभ्यांविनिर्द्धूताः त्यक्ताइतिभावः ॥ ३ ॥ ताभ्यांशुंभनिशुंभाभ्यांहृताधिकाराअथहृतराज्यानिराकृ
तःनिरस्ताः सर्वेत्रिदशाः देवाःतांप्रसिद्धांअपराजितांकैरप्यपराभूतांदेवींस्मरंतिस्मस्मृतवंतः ॥ स्मेत्यध्याहृत्य ( लट्स्मे इतिलट् ) प्रत्यादिष्टोनिरस्तःस्या
त्प्रत्याख्यातोनिराकृतः ॥ ४ ॥ अपराजितानामदेशंगताइत्याह ॥ ( ? ) यथाप्रगुक्तप्रकारेणआपत्सुस्मृतासतीतत्क्षणादेवभवतांअखिलाःपरमापदः
नाशयिष्यामीतितयादेव्याऽस्माकंदेवानांवरोदत्तोस्तीतिमतिंकृत्वाचेतसिनिश्चायदेवाःहिमवंतंनगेश्वरंजग्मुः ययुः॥ततः तत्रविष्णुमायांदेवींप्रतुष्टुवुः प्रकर्षे
णभक्तिपूर्वंस्तुतवंतः ॥ विष्णुमायामहामायेतिपर्यायौ ॥ अथवा ॥ वेवेष्टिव्विष्णुःमानंमायःविष्णुर्मायोमानंपरिमाणंयस्याःसासर्वव्यापिकेत्यर्थः ॥ ५ ॥ ६ ॥
शिवायैमंगलहेतवेभवान्यैनमः ॥ पुंयोगेतुशिवस्यस्त्रीशिवा ॥ प्रकृतिःजगत्कारणंसत्त्वरजस्तमसांसाम्यावस्था ॥ यद्वा ॥ अंगमंत्रापेक्षयामूलमंत्रमात्रा

हृताधिकारास्त्रिदशास्ताभ्यांसर्वेनिराकृताः ॥ महासुराभ्यांतांदेवींसंस्मरंत्यपराजितां ॥ ४ ॥ तयास्माकंवरो
दत्तोयथापत्सुस्मृताखिलाः ॥ भवतांनाशयिष्यामितत्क्षणात्परमापदः ॥ ५ ॥ इतिकृत्वामतिंदेवाहिमवंतंनगे
श्वरम् ॥ जग्मुस्तत्रततोदेवींविष्णुमायांप्रतुष्टुवुः ॥ ६ ॥ ॥ देवाऊचुः ॥ ॥ नमोदेव्यैमहादेव्यैशिवायैस
ततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतां ॥ ७ ॥ रौद्रायैनमोनित्यायैगौर्यैधात्र्यैनमोनमः ॥ नमोज
गत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥८॥ त्मिकादेवताप्रकृतिः ॥ यद्वा ॥प्रत्ययात्पूर्वा प्रकृतिः ॥ यदाहुः ॥ प्रकृतिः पार्वतीसाक्षात्प्रत्ययस्तुमहे

श्वरः॥अर्द्धनारीश्वरःशव्दःकामधुग्वःप्रसीदत्विति तस्यैनमः ॥ भद्रायैनमः ॥ भद्रासर्वमंगलाभद्ररूपेत्यर्थः॥तांप्रसिद्धामस्मद्वरदामंबांनियताजितेंद्रियाःप्रण
तानम्रीभवामः ॥ स्मशव्दःपूरणेऽव्ययं ॥ नियत्यैप्रणतात्मनांइतिपाठेभक्तिप्रव्हस्वभावानांपुंसांनियत्यैदिष्टचैनमःभाग्यरूपायैइत्यर्थः ॥ दैवंदिष्टंभागधेयं
भाग्यंस्त्रीनियतिर्विधिः ॥ ७ ॥ रुद्रस्येवरौद्रंउग्ररूपमस्त्यस्यारौद्रातस्यैनमः ॥ रौद्रशव्दादर्शआदित्वादच् ॥ नेध्रुवेत्यप् ॥ नित्यायैकालावस्थितायै ॥ गुरीउ
द्यमेतुदादिरनुदात्तेतःगुरतेगुरःइगुपधत्वात्कः॥गुरएवगौरःस्वार्थेण् ॥ स्त्रियांङीप् ॥ यद्वावर्णवाचित्वेनरूढत्वात् षिद्गौरादिभ्यश्चेतिनिपातनात्साधुत्वेङीप् ॥
गौर्यैपार्वत्यैनमः ॥ गौरीगौरवर्णयोगात् ॥ यद्वा ॥ गुङ्अव्यक्तेशव्दे अतःगुणादौकज्रेन्द्राग्रेत्यादिसूत्रेणरनिबुद्धौनिपातितायांगवतेगौरः ॥ गौरोरुणेसिते

गौर्य्यैपार्वत्यैनमः ॥ गौरीगौरवर्णयोगात् ॥ यद्वा ॥ गुङ्अव्यक्तेशब्दे अतःगुणादौक्रब्रेन्द्राग्रेत्यादिसूत्रेणरनिबुद्धौनिपातितायागवतेगौरी ॥ गौरिणीसा

पीते ॥ धाव्यैधरण्यैनमः ॥ उपमाक्रियेया ॥ धात्रीस्यादुपमातात्विक्षितिश्चिरप्यामलक्यपि ॥ ८ ॥ ज्योतिःशास्त्रविशेषस्यात् ज्योतिरक्षरसेजसोः ॥ ज्योतिर्नो

भास्करेक्कीवमग्निखद्योतदृष्टिषु ॥ ज्योतिरस्त्यस्यांतस्यैज्योत्स्नायैनमः ॥ चदिआल्हादने ॥ चन्दतिचन्द्रः ॥रूपरूपक्रियायां रूपरूपदर्शनेचचुरादिः॥ चंद्रं

रूपयतितच्छीलाचंद्ररूपिणीतिस्यैनमः ॥ चंद्रस्यरूपंकरोतिचंद्ररूपिणीतिचव्युत्पत्तिः । सुखदुःखतत्क्रियायांचुरादिः॥ सुखयतिसुखा पचादित्वादच्तस्यै

कलासुसाधुः ॥ कल्याशुभात्मिकावाणी॥कल्यामणतिकल्यंनिरुक्तंवाअणतिकथयतिकल्याणीतस्यैनमः॥अणशब्दार्थःकर्मण्यण् ॥ किंचजगद्भिःऋद्ध्यै

सिद्ध्यैचप्रणतांवंदितांजगज्जननींदेवींप्रतिनमःनतिंकुर्मः कुर्मोइतिपाठे ॥ प्रणमंतीतिप्रणंतःतेषांप्रणतामितिषष्ठीबहुवचनांतंबोध्यं ॥ तथाचप्रणतां

प्रणमतांऋद्ध्यैसिद्ध्यैचनमःइत्यलवेश्वरभट्टाः ॥ कूर्म्यैइतिपाठेकूर्मसंबंधिन्यैशक्त्यैनमः ॥ ९ ॥ निःक्रांताऋतेःसन्मार्गान्निर्ऋतिःअलक्ष्मीःअन्यायो

नैर्ऋत्यैभूभृतांल

ज्योत्स्नायैचंद्ररूपिण्यैसुखायैसततंनमः ॥ कल्याण्यैप्रणतामृध्यैसिद्ध्यैकूर्म्यैनमोनमः ॥ ९ ॥

क्ष्म्यैशर्वाण्यैतेनमोनमः ॥ दुर्गायैदुर्गपारायैसारायैसर्वकारिणि॥ख्यात्यैतथैवकृष्णायैधूम्रायैसततंनमः ॥ १० ॥

अतिसौम्यातिरौद्रायैनमस्तस्यैनमोनमः ॥ नमोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥ ११ ॥ ॥छ॥

पार्जितालक्ष्मीः॥स्यादलक्ष्मीस्तुनिर्ऋतिः ॥ निर्ऋतेःउपमाकृतिर्नैर्ऋतीतस्यैअलक्ष्मीरूपायैशर्वाण्यैशंभुपत्न्यैनमोनमः॥ यद्वा॥ निश्चिताऋतिःसत्यतायेनस

निर्ऋतिः ॥ निर्ऋतेर्दिक्पालस्येयंनैर्ऋतीतस्यैनिर्ऋत्युपार्जितलक्ष्मीरूपायैनमः ॥ अथचभुवंबिभ्रतीतिभूभृतःआदिमंडूकादिनागादिकुलपर्वतादिमनुप्रभृति

राजानःतेषांलक्ष्मीरूपायैनमः ॥ शर्वस्यस्त्रीशर्वाणी ॥ इंद्रवरुणेत्यादिनापुंयोगेङीषानुकौ ॥ हेसर्वकारिणिदेवितुभ्यंदुर्गायैसततंनमः ॥ दुःखेनगम्यतेदुर्गा॥

यद्वा ॥ दुःखेनगच्छत्यस्यांदुर्गा ॥ सुदुरोरधिकरणेइतिवक्तव्यंगमेर्डः ॥ तथाहेदेवितुभ्यंदुर्गपारायै दुर्गपारंयस्याःमहामायाख्यासिंधोःसादुर्गपारा ॥ यद्वा ॥

पिपर्त्तिपारा ॥ पॄपालनपूरणयोः ॥ यद्वा ॥ दुर्गाःपाराःपारयंतोगणायस्याःतस्यै॥ हेदेवितुभ्यंसारायै संसारसागरेवरायैश्रेष्ठायैसततंनमः ॥ तुभ्यंख्यात्यैवि

ख्यातिरूपायैसततंनमः ॥ तुभ्यंकृष्णायैकृष्णवर्णायैकालरात्र्यैनमः ॥ हेदेवितुभ्यंधूम्रायैधूम्रवर्णायैनमः ॥ सर्वंकरोतिसर्वकारिणिसंबुद्धिः ॥ १० ॥ सो

माट्यण् ॥ सौम्यंसोमदेवताकंसुंदरंचरूपं अत्यर्थंसौम्यंयस्याःसाऽतिसौम्या ॥ रौद्रंदेवताकंरुद्रसंबंधिवारूपंरौद्रंअत्यर्थंरौद्रंयस्याःसाऽतिरौद्रा ॥ ततश्चभ

कारादेवाविनिर्द्धूताःस्वर्गाद्दूरीकृताआसन् ॥ ताभ्यामसुराभ्यांविनिर्द्धूताः त्यक्ताइतिभावः ॥ ३ ॥ ताभ्यांशुंभनिशुंभाभ्यांहृताधिकाराअथहृतराज्यानिराकृताःनिरस्ताः सर्वेत्रिदशाः देवाःतांप्रसिद्धांअपराजितांकैरप्यपराभूतांदेवींस्मरंतिस्मस्मृतवंतः ॥ स्मेत्यध्याहृत्य ( लट्स्मे इतिलट् ) प्रत्यादिष्टोनिरस्तःस्याद्प्रत्याख्यातोनिराकृतः ॥ ४ ॥ अपराजितानामदेशंगताइत्याह ॥ ( ? ) यथाप्रगुक्तप्रकारेणआपत्सुस्मृतासतीतत्क्षणादेवभवतांअखिलाःपरमापदःनाशयिष्यामीतितयादेव्याऽस्माकंदेवानांवरोदत्तोस्तीतिमतिंकृत्वाचेतसिनिश्चायदेवाःहिमवंतंनगेश्वरंजग्मुः ययुः॥ततः तत्रविष्णुमायांदेवींप्रतुष्टुवुः प्रकर्षेणभक्तिपूर्वंस्तुतवंतः ॥ विष्णुमायामहामायेतिपर्यायौ ॥ अथवा ॥ वेवेष्टिइतिविष्णुःमानंमायःविष्णुर्मायोमानंपरिमाणंयस्याःसासर्वव्यापिकेत्यर्थः ॥ ५ ॥ ६ ॥ शिवायैमंगलहेतवेभवान्यैनमः ॥ पुंयोगेतुशिवस्यस्त्रीशिवा ॥ प्रकृतिःजगत्कारणंसत्त्वरजस्तमसांसाम्यावस्था ॥ यद्वा ॥ अंगमंत्रापेक्षयामूलमंत्रमात्रा

हृताधिकारास्त्रिदशास्ताभ्यांसर्वेनिराकृताः ॥ महासुराभ्यांतांदेवींसंस्मरंत्यपराजितां ॥ ४ ॥ तयास्माकंवरो दत्तोयथापत्सुस्मृताखिलाः ॥ भवतांनाशयिष्यामितत्क्षणात्परमापदः ॥ ५ ॥ इतिकृत्वामतिंदेवाहिमवंतंनगेश्वरम् ॥ जग्मुस्तत्रततोदेवींविष्णुमायांप्रतुष्टुवुः ॥ ६ ॥ ॥ देवाऊचुः ॥ ॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतां ॥ ७ ॥ रौद्रायैनमोनित्यायैगौर्य्यैधात्र्यैनमोनमः ॥ नमोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥८॥ त्मिकादेवताप्रकृतिः ॥ यद्वा ॥प्रत्ययात्पूर्वा प्रकृतिः ॥ यदाहुः ॥ प्रकृतिः पार्वतीसाक्षात्प्रत्ययस्तुमहेश्वरः॥अर्द्धनारीश्वरःशब्दःकामधुग्वःप्रसीदत्विति तस्यैनमः ॥ भद्रायैनमः ॥ भद्रासर्वमंगलाभद्ररूपेत्यर्थः॥तांप्रसिद्धामस्मद्वरदामंबांनियताजितेंद्रियाःप्रणतानम्रीभवामः ॥ स्मशब्दःपूरणेऽव्ययं ॥ नियत्यैप्रणतात्मनांइतिपाठेभक्तिप्रव्हस्वभावानांपुंसांनियत्यैदिष्टचैनमःभाग्यरूपायैइत्यर्थः ॥ दैवंदिष्टंभागधेयंभाग्यंस्त्रीनियतिर्विधिः ॥ ७ ॥ रुद्रस्येयंरौद्रंउग्ररूपमस्त्यस्याःरौद्रातस्यैनमः ॥ रौद्रशब्दादर्शआदित्वादच् ॥ नेध्रुवेत्यप् ॥ नित्यायैकालावस्थितायै ॥ गुरीउद्यमेतुदादिरनुदात्तेतःगुरतेगुरःइगुपधत्वात्कः॥गुरएवगौरःस्वार्थेण् ॥ स्त्रियांङीप् ॥ यद्वावर्णवाचित्वेनरूढत्वात् षिद्गौरादिभ्यश्चेतिनिपातनात्साधुत्वेङीप् ॥ गौर्य्यैपार्वत्यैनमः ॥ गौरीगौरवर्णयोगात् ॥ यद्वा ॥ गुडअव्यक्तेशब्दे अतःगुणादौकस्त्रेन्द्राग्रेत्यादिसूत्रेणरनिगुडौनिपातितायांगयतेगौरः ॥ गौरोरुणोसिते

गौर्य्यैपार्वत्यैनमः ॥ गौरीगौरवर्णयोगात् ॥ यद्वा ॥ गुङ्अव्यक्तेशब्दे अतःगुणादौकऋज्रेन्द्राग्रेत्यादिसूत्रेणरनिवृद्धौनिपातितायांगवतेगौरः ॥ गौरीरूपासैत

पीवे ॥ धात्र्यैधरण्यैनमः ॥ उपमात्र्यैवा ॥ धात्रीस्यादुपमातापिक्षितिरप्यामलक्यपि ॥ ८ ॥ ज्योतिःशास्त्रविशेरस्मात् ज्योतिरस्त्रतेजसोः ॥ ज्योतिर्नां
भास्करेक्षीबमग्निखद्योतदृष्टिषु ॥ ज्योतिरस्त्यस्यांतस्यैज्योत्स्नायैनमः ॥ चदिआल्हादने ॥ चन्दतिचन्द्रः॥रूपरूपक्रियायां रूपरूपदर्शनेचचुरादिः॥चंद्रं
रूपयतितच्छीलाचंद्ररूपिणीतस्यैनमः ॥ चंद्रस्यरूपंकरोतिचंद्ररूपिणीतिचव्युत्पत्तिः । सुखदुःखतत्क्रियायांचुरादिः॥ सुखयतिसुखा पचादित्वादच्तस्यै
कलासुसाधुः ॥ कल्याशुभात्मिकावाणी॥कल्यामणतिकल्यंनिरुक्तंवाअणतिकथयतिकल्याणीतस्यैनमः॥अण्शब्दार्थःकर्मण्यण् ॥ किंचजगद्भिःऋद्ध्यै
सिद्ध्यैचप्रणतांवंदितांजगज्जननींदेवींप्रतिनमःनतिंकुर्मः कुर्मोइतिपाठे ॥ प्रणमंतीतिप्रणंतःतेषांप्रणतामितिषष्ठीबहुवचनांतंबोध्यं ॥ तथाचप्रणतां
प्रणमतांऋद्ध्यैसिद्ध्यैचनमःइत्यलवेश्वरभट्टाः ॥ कूर्म्यैइतिपाठेकूर्मसंबंधिन्यैशक्त्यैनमः ॥ ९ ॥ निःक्रांताकृतेःसन्मार्गान्निर्ऋतिःअलक्ष्मीःअन्यायो

ज्योत्स्नायैचंद्ररूपिण्यैसुखायैसततंनमः ॥ कल्याण्यैप्रणतामृध्यैसिद्ध्यैकूर्म्यैनमोनमः ॥ ९ ॥ नैर्ऋत्यैभूभृतांल
क्ष्म्यैशर्वाण्यैतेनमोनमः ॥ दुर्गायैदुर्गपारायैसारायैसर्वकारिणि॥ख्यात्यैतथैवकृष्णायैधूम्रायैसततंनमः ॥१०॥
अतिसौम्यातिरौद्रायैनमस्तस्यैनमोनमः ॥ नमोजगत्प्रतिष्ठायैदेव्यैकृत्यैनमोनमः ॥ ११ ॥ ॥छ॥

पार्जितालक्ष्मीः॥स्यादलक्ष्मीस्तुनिर्ऋतिः ॥ निर्ऋतेःउपमाकृतिर्नैर्ऋतीतस्यैअलक्ष्मीरूपायैशर्वाण्यैशंभुपत्न्यैनमोनमः॥ यद्वा॥ निश्चिताकृतिःसत्यतायेनस
निर्ऋतिः ॥ निर्ऋतेर्दिक्पालस्येयंनैर्ऋतीतस्यैनिर्ऋत्युपार्जितलक्ष्मीरूपायैनमः ॥ अथचभुवंबिभ्रतीतिभूभृतःआदिमंडूकादिनागादिकुलपर्वतादिमनुप्रभृति
राजानःतेषांलक्ष्मीरूपायैनमः ॥ शर्वस्यपत्नीशर्वाणी ॥ इंद्रवरुणेत्यादिनापुंयोगेङीषानुकौ ॥ हेसर्वकारिणिदेवितुभ्यंदुर्गायैसततंनमः ॥ दुःखेनगम्यतेदुर्गा॥
यद्वा ॥ दुःखेनगच्छत्यस्यांदुर्गा ॥ सुदुरोरधिकरणेइतिवक्तव्यंगमेर्डः ॥ तथाहेदेवितुभ्यंदुर्गपारायै दुर्गंपारंयस्याःमहामायाख्यासिंधोःसादुर्गपारा ॥ यद्वा ॥
पिपर्त्तिपारा ॥ पॄपालनपूरणयोः ॥ यद्वा ॥ दुर्गाःपाराःपारयंतोगणायस्याःतस्यै॥ हेदेवितुभ्यंसारायै संसारसागरेवरायैश्रेष्ठायैसततंनमः ॥ तुभ्यंख्यात्यैवि
ख्यातिरूपायैसततंनमः ॥ तुभ्यंकृष्णायैकृष्णवर्णायैकालरात्र्यैनमः ॥ हेदेवितुभ्यंधूम्रायैधूम्रवर्णायैनमः ॥ सर्वंकरोतिसर्वकारिणिसंबुद्धिः ॥ १० ॥ सो
माट्यण् ॥ सौम्यंसोमदेवताकंसुंदरंचरूपं अत्यर्थंसौम्यंयस्याःसाऽतिसौम्या ॥ रौद्रदेवताकंरुद्रसंबंधिवारूपंरौद्रंअत्यर्थंरौद्रंयस्याःसाऽतिरौद्रा ॥ ततश्चभ

क्लि अन्तस्य
पञ्चीजु० ।

युवादिषु रुद्रशब्दो न दृश्यते।

जतामभजवांचयथाक्रमंअतिसौम्याचासावतिरौद्राचेतिकर्मधारयः॥तस्यैवाङ्मोमारूपायैत्रिशक्त्यात्मिकायैनमोनमः ॥ इतिशक्तित्रयापेक्षंनमस्त्रयं ॥सो
मस्यभावःसौम्यं भावेष्यञ् ॥ रुद्रस्यभावःरौद्रं युवादित्वाद्भावेअण् ॥ अतिक्रांतंसौम्यंययासाऽतिसौम्या॥अतिक्रांतंरौद्रंययासाऽतिरौद्रा॥ततःकर्मधारयेस
तितस्यैनमइत्यप्यनुसंधेयं ॥ जगतांप्राणभृतांप्रतिष्ठाआस्पदमाधारशक्तिःस्थानंतस्यैजगत्प्रतिष्ठारूपायैनमः ॥ प्राणिनांप्राणधारणार्थंयत्स्थानंमूलाधारसं
ज्ञंतत्प्रतिष्ठेत्युच्यते ॥ आस्पदंप्रतिष्ठायामित्यास्पदशब्दपर्यायःप्रतिष्ठाशब्दः ॥ दिवुक्रीडादौ ॥ दीव्यतीतिदेवीतस्यैक्रीडाविजिगीषाद्यर्थक्रियाकारिण्यैन
मः ॥ करणंकृतिःप्रयत्नःसर्गस्थितिप्रत्यवहारविषयःप्रयत्नोत्रविवक्षितः ॥ तस्यैप्रयत्नरूपायैनमः॥ नमस्यानांत्रित्वादित्वादिह्नमस्त्रित्वं कर्त्र्यैइतिपाठेतृन्नं
तत्वाज्जगदितिकर्मविवक्षितं ॥ जगत्करणशीलायैनमइत्यर्थः ॥ ११ ॥ यादेवीवाङ्मोमात्मिकासर्वकालेषुकालत्रयात्मिकासर्वभूतेषुभूतात्मिका ॥ अना

यादेवीसर्वभूतेषुविष्णुमायेतिशब्दिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १२ ॥ यादेवीसर्वभूतेषुचेत
नेत्यभिधीयते ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १३ ॥ यादेवीसर्वभूतेषुबुद्धिरूपेणसंस्थिता ॥ नम
स्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १४ ॥ ॥छ॥ ॥छ॥

त्मन्यात्मबुद्धिंजनयंतीआत्मनिवाऽनात्मबुद्धिंजनयंतीममतावशंवदान्लोकान्प्रसूयमानासर्वजननीमहामायाभगवतीविष्णुमायेतिशब्दिताकथितातस्यै
त्रिगुणरूपायैप्रत्येकंकायवाङ्मनोभिःएकस्यैचैववादेव्यै भक्तिश्रद्धातिशयद्योतनायनमःशब्दोनमस्येनचसहाम्रेडितः॥आम्रेडितंद्वित्रिरुक्तं॥ चापलेद्विर्वचनं
संभ्रमेणवृत्तिश्चापलंइत्थंहिनपौनरुक्त्यंदोषावहम् ॥ यदुक्तं ॥ प्रहर्षहर्षशोकेषुस्वप्नदैन्यभयेषुच॥स्तुत्यभ्यासानुवादेषुपौनरुक्त्यंनदुष्यति॥सर्वाणिपृथिव्यादी
निभूतानिदेहानि ॥ इतिप्रथमादेवीविष्णुमाया ॥ १२ ॥ अभिधीयतेकथ्यते ॥ चुरादावात्मनेपदं चितसंचेतनेसंवेदनेवा ॥ चेतनंचेतनाबुद्धिरेवेतिकथनं
पौनरुक्त्यंयद्यपिवैशेषिकादौदर्शनेचेतनंचेतनाबुद्धिरेवतथापिसांख्येबुद्धिधर्मश्चित्तवृत्तिविशेषविजृंभितशक्तिश्चेतनाइत्याश्रयणादपौनरुक्त्यं ॥ अन्येतुचे
तनाचित्तवृत्तिविशेषशक्तिःसंज्ञानंवा बुद्धिस्तुस्वप्रकाशज्ञानस्वभावेत्याहुः ॥ अन्येतुनिर्विकल्पज्ञानंचेतना बुद्धिःतद्विशेषावगतिःसाविकल्पकज्ञानंइत्य ॥१६०॥
स्तितयोर्भेदइत्याहुः ॥ इतिद्वितीयादेवीचेतना॥ १३॥बुद्धिरित्येवंरूपेणसम्यक्स्थिता॥यदम्यधुः संधारणेस्थितौभृत्यौ(बुद्धिः) ॥इतितृतीयादेवीबुद्धिः॥ १४॥

स्तितयोर्भेदइत्याहुः ॥ इतिद्वितीयादेवीचेतना ॥ १३ ॥बुद्धिरित्येवरूपेणसम्यक्संस्थता ॥यदम्यधुः संधारणीस्थलाभूत्या(बुद्धिः) ॥इतितृतीयादेवीबुद्धिः ॥ १४ ॥

निद्रेतिरूपंतस्यैनमः ॥ द्राकुत्सायांनियतंद्रांत्यस्यांनिद्रा संवेशः ॥ भुक्तान्नादिपरिपाकादिहेतुर्निरिंद्रियप्रदेशमलकोशेमनसोवस्थानंनिद्रा ॥ सर्वेंद्रियव्या
पारविरतप्राणनंसुखनंनिद्रेत्यन्ये ॥ इतिचतुर्थीदेवीनिद्रा ॥ १५ ॥ क्षुधबुभुक्षायां ॥ संपदादित्वाद्भावेस्त्रियांक्विप् ॥ क्षुध्प्रातिपदिकं ॥ भोक्तुमिच्छाक्षुत् ॥ अ
शनायाबुभुक्षाक्षुत्तयाक्षुधा ॥ रूपेणेतिपृथक्पदं ॥ यद्वा ॥ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ हलंतादपिटापंचयथावाचानिशादिशा ॥ ततश्चक्षुधेति
रूपंतेनक्षुधारूपेण क्षुधांविनाप्राणिनांसुखंनास्ति ॥ इतिपंचमीदेवीक्षुधा ॥ १६ ॥ छायाप्रतिबिंबरूपासर्वभूतेषुतिष्ठति ॥ नष्टच्छायोमध्याह्नइत्यत्रतुआ
तपभावाभावोविवक्षितः ॥ छायासूर्यप्रियाकांतिःप्रातिबिंबमनातपः ॥ प्रतिबिंबेयथासंक्रातछायःआदर्शः ॥ छयतिच्छिनत्तिसंतापंछाया ॥इतिषष्ठीदेवीछा

यादेवीसर्वभूतेषुनिद्रारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १५ ॥ यादेवीसर्वभूतेषुक्षु
धारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १६ ॥ यादेवीसर्वभूतेषुच्छायारूपेणसंस्थिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १७ ॥ यादेवीसर्वभूतेषुशक्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ १८ ॥ यादेवीसर्वभूतेषुतृष्णारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥
॥ १९ ॥ यादेवीसर्वभूतेषुक्षांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २० ॥ ॥छ॥

या ॥ १७ ॥ शक्लृशक्तौ शकनंशक्तिःसामर्थ्यं वस्तुगतःस्वभावसिद्धोधर्मःशक्तिरितिरूपंतेन ॥ शक्ति(ः)प्रतिवस्तुप्रतिनियतार्थक्रियाकारित्वंवस्तुधर्मइत्येके
वस्तुरूपमेवशक्तिर्नतुवस्तुनोन्योधर्मःशक्तिरित्यन्येभ्युपजग्मुः ॥ इहतुसर्वभूतेष्वित्याधाराधेयभावानुवाच्याच्छक्तिर्वस्तुधर्मइत्येषपक्षोभ्युपगतः ॥ इतिसप्त
मीदेवीशक्तिः ॥ १८ ॥ सर्वाणिभूतानिपृथिव्यादीनियेषांदेहानामारंभकत्वेनसंतितानिसर्वभूतानिदेहाःतेषु ॥ ञितृषःपिपासायां ॥ तृषिशुषिरसिभ्यःक्नि
त्इतिनः ॥ तृष्णाउपभोगनिमित्तकोभिलाषः ॥ तृष्णाभिलषणंभोगेतृष्णावनपिशाचिका ॥ तृष्णेस्पृहापिपासेद्वेतद्रूपेहांबिकास्मृता ॥ तर्षणंतृष्णास्पृहानि
रूढलक्षणत्वात् ॥ इत्यष्टमीदेवीतृष्णा ॥ १९ ॥ क्षमूष्सहने षित्वात्स्त्रियांक्षमा ॥ बाहुलकात्क्तिनिक्षांतिः॥ अनुनासिकस्यक्विझलोःक्ङिति तिदीर्घः ॥ क्षां

युवादिषु रुद्रशब्दो न दृश्यते।





जतामभजतांचयथाक्रमंअतिसौम्याचासावतिरौद्राचेतिकर्मधारयः॥तस्यैवाङ्मोमारूपायैत्रिशक्त्यात्मिकायैनमोनमः ॥ इतिशक्तित्रयापेक्षंनमस्त्रयं ॥सो मस्यभावःसौम्यं भावेष्यञ् ॥ रुद्रस्यभावःरौद्रं युवादित्वाद्भावेअण् ॥ अतिक्रांतंसौम्यंययासाऽतिसौम्या॥अतिक्रांतंरौद्रंययासाऽतिरौद्रा॥ततःकर्मधारयेस तिवस्यैनमइत्यप्यनुसंधेयं ॥ जगतांप्राणभृतांप्रतिष्ठाआस्पदमाधारशक्तिःस्थानंतस्यैजगत्प्रतिष्ठारूपायैनमः ॥ प्राणिनांप्राणधारणार्थंयत्स्थानंमूलाधारसं ज्ञंतत्प्रतिष्ठेत्युच्यते ॥ आस्पदंप्रतिष्ठायामित्यास्पदशब्दपर्यायःप्रतिष्ठाशब्दः ॥ दिवुक्रीडादौ ॥ दीव्यतीतिदेवीतस्यैक्रीडाविजिगीषाद्यर्थक्रियाकारिण्यैन मः ॥ करणंकृतिःप्रयत्नःसर्गस्थितिप्रत्यवहारविषयःप्रयत्नोत्रविवक्षितः ॥ तस्यैप्रयत्नरूपायैनमः॥ नमस्थानांत्रित्वादित्वादिहनमस्त्रित्वं कर्त्र्यैइतिपाठेतून्नं तत्वाज्जगदितिकर्मविवक्षितं ॥ जगत्करणशीलायैनमइत्यर्थः ॥ ११ ॥ यादेवीवाङ्मोमात्मिकासर्वकालेषुकालत्रयात्मिकासर्वभूतेषुभूतात्मिका ॥ अना

यादेवीसर्वभूतेषुविष्णुमायेतिशब्दिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १२ ॥ यादेवीसर्वभूतेषुचेत नेत्यभिधीयते ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १३ ॥ यादेवीसर्वभूतेषुबुद्धिरूपेणसंस्थिता ॥ नम स्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १४ ॥ ॥छ॥ ॥छ॥

त्मन्यात्मबुद्धिंजनयंतीआत्मनिवाऽनात्मबुद्धिंजनयंतीममतावशंवदान्लोकान्प्रसूयमानासर्वजननीमहामायाभगवतीविष्णुमायेतिशब्दिताकथितातस्यै त्रिगुणरूपायैप्रत्येकंकायवाङ्मनोभिःएकस्यैचैववादेव्यै भक्तिश्रद्धातिशयद्योतनायनमःशब्दोनमस्येनचसहाम्रेडितः॥आम्रेडितंद्विस्त्रिरुक्तं॥ चापलेद्विर्वचनं संभ्रमेणवृत्तिश्चापलंइत्थंहिनपौनरुक्त्यंदोषावहम् ॥ यदुक्तं ॥ प्रहर्षहर्षशोकेषुस्वप्नदैन्यभयेषुच॥स्तुत्यभ्यासानुवादेषुपौनरुक्त्यंनदुष्यति॥सर्वाणिपृथिव्यादी निभूतानिदेहानि ॥ इतिप्रथमादेवीविष्णुमाया ॥ १२ ॥ अभिधीयतेकथ्यते ॥ चुरादावात्मनेपदं चितसंचेतनेसंवेदनेवा ॥ चेतनंचेतनाबुद्धिरेवेतिकथनं पौनरुक्त्यंयद्यपिवैशेषिकादौदर्शनेचेतनंचेतनाबुद्धिरेवतथापिसांख्येबुद्धिधर्मश्चित्तवृत्तिविशेषविजृंभितशक्तिश्चेतनाइत्याश्रयणादपौनरुक्त्यं ॥ अन्येतुचे तनाचित्तवृत्तिविशेषशक्तिःसंज्ञानंवा बुद्धिस्तुसप्रकारज्ञानमवबोध... ॥ ... निर्विकल्पज्ञानंचेतना ॥ बुद्धिःतद्विशेषावगतिःसविकल्पकज्ञानंइत्य स्तितयोर्भेदइत्याहुः ॥ इतिद्वितीयादेवीचेतना ॥ १३ ॥बुद्धिरित्येवंरूपेणसम्यक्स्थिता॥यदम्यधुः संधारणेस्थितौभूस्यौ(बुद्धिः) ॥इतितृतीयादेवीबुद्धिः॥ १४॥

स्तितयोर्भेदइत्याहुः ॥ इतीद्वितीयादेवीचेतना ॥ १३ ॥ बुद्धिरित्यवरूपेणसम्यक्संस्थिता ॥ ...

निद्रेतिरूपंतस्यैनमः ॥ द्राकुत्सायांनियतंद्रांत्यस्यांनिद्रा संवेशः ॥ भुक्तान्नादिपरिपाकादिहेतुर्निरिंद्रियप्रदेशमल्ककोशेमनसोवस्थानंनिद्रा ॥ सर्वेंद्रियव्या
पारविरतप्राणनंसुखनंनिद्रेत्यन्ये ॥ इतिचतुर्थीदेवीनिद्रा ॥ १५ ॥ क्षुधबुभुक्षायां ॥ संपदादित्वाद्भावेस्त्रियांक्विप् ॥ क्षुध्प्रातिपदिकं ॥ भोक्तुमिच्छाक्षुत् ॥ अ
शनायाबुभुक्षाक्षुत्तयाक्षुधा ॥ रूपेणेतिपृथक्पदं ॥ यद्वा ॥ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ हलंतादपिटापंचयथावाचानिशादिशा ॥ ततश्चक्षुधेति
रूपंतेनक्षुधारूपेण क्षुधांविनाप्राणिनांसुखंनास्ति ॥ इतिपंचमीदेवीक्षुधा ॥ १६ ॥ छायाप्रतिबिंबरूपासर्वभूतेषुतिष्ठति ॥ नष्टच्छायोमध्याह्नइत्यत्रतुआ
तपभावाभावोविवक्षितः ॥ छायासूर्यप्रियाकांतिःप्रतिबिंबमनातपः ॥ प्रतिबिंबेयथासंक्रांतछायःआदर्शः ॥ छ्यतिच्छिनत्तिसंतापंछाया ॥ इतिषष्ठीदेवीछा

यादेवीसर्वभूतेषुनिद्रारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १५ ॥ यादेवीसर्वभूतेषुक्षु
धारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १६ ॥ यादेवीसर्वभूतेषुच्छायारूपेणसंस्थिता ॥
नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ १७ ॥ यादेवीसर्वभूतेषुशक्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
नमस्तस्यैनमोनमः ॥ १८ ॥ यादेवीसर्वभूतेषुतृष्णारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥
॥ १९ ॥ यादेवीसर्वभूतेषुक्षांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २० ॥ ॥छ॥

या ॥ १७ ॥ शक्लृशक्तौ शकनंशक्तिःसामर्थ्यं वस्तुगतःस्वभावसिद्धोधर्मःशक्तिरितिरूपंतेन ॥ शक्तिः प्रतिवस्तुप्रतिनियतार्थक्रियाकारित्वंवस्तुधर्मइत्येके
वस्तुरूपमेवशक्तिर्नतुवस्तुनोन्योधर्मःशक्तिरित्यन्येभ्युपजग्मुः ॥ इहतुसर्वभूतेष्वित्याधाराधेयभावानुवाच्याच्छक्तिर्वस्तुधर्मइत्येषपक्षोभ्युपगतः ॥ इतिसप्त
मीदेवीशक्तिः ॥ १८ ॥ सर्वाणिभूतानिपृथिव्यादीनियेषांदेहानामारंभकत्वेनसंतितानिसर्वभूतानिदेहाःतेषु ॥ ञितृषःपिपासायां ॥ तृषिशुषिरसिभ्यःक्नि
त्इतिनः ॥ तृष्णाउपभोगनिमित्तकोभिलाषः ॥ तृष्णाभिलषणंभोगेतृष्णावनपिशाचिका ॥ तृष्णेस्पृहापिपासेद्वेतद्रूपेहांबिकास्मृता ॥ तर्षणंतृष्णास्पृहानि
रूढलक्षणत्वात् ॥ इत्यष्टमीदेवीतृष्णा ॥ १९ ॥ क्षमूष्सहने षित्वात्स्त्रियांक्षमा ॥ बाहुलकात्क्तिनिक्षांतिः ॥ अनुनासिकस्यक्विझलोःक्ङितीतिदीर्घः ॥ क्षां

तिःक्षमातितिक्षामर्षःसहार्थकाः ॥ क्षांतिस्तृष्णाविरोधिनीपरप्रयुक्तापकारंप्रत्युंपेक्षाप्रतिकूलवेदनांप्रत्युपेक्षा ॥ इतिनवमोदेवीक्षांतिः ॥२० ॥ नित्यैकानुगतप्रत्ययहेतुरनेकसमवायिनीजातिः ॥ इतिदशमी ॥ २१ ॥ लज्जाव्रीडेस्त्रियां गुरोश्चहलइत्यप्रत्ययः ॥ झलांजश्झशीतिजश्दः श्चुत्वं स्त्रियामजाद्यतष्टाप् ॥ कर्त्तव्याकरणनिमित्तंअकारणनिमित्तमन्यतःस्वतोवाजनितंलज्जनंसंकोचनंलज्जेत्येकादशी ॥ २२॥ शमउपशमे ॥ स्त्रियांक्तिन् ॥ क्षांतिवद्दीर्घः॥ शमथुस्तुशमःशांतिः ॥ कामक्रोधाद्यभावः ॥ विकृतेंद्रियनिवृत्तिःशांतिरित्यन्ये ॥ विषयव्यावृत्तात्मतेत्यपरे ॥ इतिद्वादशीशांतिः ॥२३ ॥ डुधाञ्धारणपोषणयोः ॥ श्रच्छब्दस्योपसंख्यानंइत्युपसर्गसंज्ञा ॥ आतश्चोपसर्गेइतिकः स्त्रियांटाप् ॥ श्रद्धनं श्रद्धासम्प्रत्ययःस्पृहा॥संप्रत्ययोभक्त्यतिशयःश्रद्धयापरयोपेतइतिवत् ॥ शास्त्रोक्तार्थाविपरीतबुद्धिःश्रद्धेत्यन्ये ॥ आदरेणानुसरणंभक्तिःश्रद्धात्वास्तिक्यबुद्धिरित्यपरे ॥ इतित्रयोदशी ॥ २४ ॥ कमुकांतौ ॥ कमोणिङ् ॥ आयादयआर्धधातुकेवा ॥ स्त्रियांक्तिन् ॥ अनुनासिकस्यक्विझलोःक्ङितीतिइतिदीर्घः ॥ शोभा कांतिः ज्योतिःस्वरूपोज्ज्वलतेत्याहुः॥इतिचतुर्दशी ॥ २५॥ लक्षदर्शनांकनयोःचुरादिः ॥ लक्षेर्मुट्चेतिईतस्यमुडागमः ॥ नेड्वशिकृति॥ णेरनिटीतिणिलोपः ॥ लक्ष्मीःसाविभूतिश्चकायशोभाचेतिपंचदशी ॥ २६ ॥ धृञ्धारणे भ्वादिःस्त्रियांक्तिन् ॥ धृतिःस्याद्धारणेधैर्यसौख्यसंतोषयोरपि ॥ इतिषोडशी ॥ २७॥

**यादेवीसर्वभूतेषुजातिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २१ ॥ यादेवीसर्वभूतेषुलज्जारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २२ ॥ यादेवीसर्वभूतेषुशांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २३ ॥ यादेवीसर्वभूतेषुश्रद्धारूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २४ ॥ यादेवीसर्वभूतेषुकांतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः॥२५ यादेवीसर्वभूतेषुलक्ष्मीरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २६ ॥ यादेवीसर्वभूतेषुधृतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २७॥** ॥ ७ ॥

॥ ७ ॥

शी ॥ २६ ॥ धृञ्धारणे श्वादिःस्त्रियांक्तिन् ॥ धृतिःस्याद्धारणधैर्यसाख्यसतोषयोरपि ॥ इतिषोडशी ॥ २७ ॥

वृतुवर्त्तनेस्त्रियांक्तिन् ॥ वर्त्तनंवृत्तिःवर्त्ततेऽनयावृत्तिः ॥ आजीवोजीविकावार्त्तावृत्तिर्वेतनजीवने ॥ वृत्तिर्जीवनोपायः ॥ युक्तेक्ष्मादावृतेभूतंप्राण्यतीतेसमे
त्रिषु ॥ भूतंक्लीबेग्रहेयुक्तेपृथिव्यादावृतेपिच ॥ इति सप्तदशी ॥२८॥ स्याच्चिंतास्मृतिराध्यानं ॥ अनुभूतस्यभावनाख्यसंस्कारहेतुकोज्ञानविशेषः स्मृतिः॥
इत्यष्टादशी ॥२९ ॥ दयरक्षणे ॥ षिद्भिदादिभ्योङ् ॥ दयंतेऽनयादया ॥ परदुःखप्रहाणेच्छापरदुःखसमभाक्त्वंवादया ॥ इत्येकोनविंशी ॥३०॥ नीतिर्न
यःइतिविंशीदेवीनीतिः ॥ ३१ ॥ तुषप्रीतौ ॥ तुष्टिःप्रीतिरानन्दः ॥ विषययोगमवाप्यतदभिलाषोपरमःतुष्टिरित्यपरे ॥ अन्येतुविषयोपभोगंप्राप्यतदभिला

॥ २८ ॥ यादेवीसर्वभूतेषुस्मृति
यादेवीसर्वभूतेषुवृत्तिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ २९ ॥ यादेवीसर्वभूतेषुदयारूपेणसंस्थिता ॥ नम
रूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३० ॥ यादेवीसर्वभूतेषुनीतिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यै
स्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३१ ॥ यादेवीसर्वभूतेषुतुष्टिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥
नमस्तस्यैनमोनमः ॥ ३२ ॥ यादेवीसर्वभूतेषुपुष्टिरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३३ ॥ यादेवीसर्वभूते
षुमातृरूपेणसंस्थिता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३४ ॥ यादेवीसर्वभूतेषुभ्रांतिरूपेणसंस्थि
ता ॥ नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः ॥ ३५ ॥ इन्द्रियाणामधिष्ठात्रीभूतानामखिलेषुया ॥ भूतेषुसततं
व्याप्त्यैतस्यैदेव्यैनमोनमः ॥ ३६ ॥ ॥छ॥ ॥छ॥

षत(स्तं)दवाप्यप्राप्तंपरमंसुखंइत्याहुः॥ इत्येकविंशी ॥३२॥ पुषपुष्टौ ॥ पुष्टिरवयवोपचयः॥इतिद्वाविंशी ॥३३॥ मात्यस्यांगर्भइतिमाता ॥ जनयित्रीप्रसू
र्माता ॥ यद्वा ॥ मानपूजायां ॥ मान्यतेपूज्यतेमाता ॥ उणादौ नप्तृनेष्टृत्वष्टृ इत्यादिसूत्रेणनिपात्यते ॥यद्वा॥अष्टौमातृनाम्न्यआद्याःशक्तयः याःविनाभूत
सृष्टिरेवनघटते ॥ ब्राह्मीमाहेश्वरीचैंद्रीवाराहीवैष्णवीतथा ॥ कौमारीचर्ममुण्डाचकालीसंकर्षणीतिच ॥ इतित्रयोविंशी ॥ ३४ ॥ भ्रांतिर्मिथ्यामति
र्भ्रमः ॥ अतस्मिंस्तदितिज्ञानंभ्रांतिः ॥ इतिचतुर्विंशीदेवीभ्रांतिः ॥ ३५ ॥ इत्थंविष्णुमायादिमूर्त्तयोदेव्याःसर्वभूतेषुवर्त्तमानाभ्रांत्यंताःचतुर्विंशतिः

प्रदर्शिता:॥ यादेवी भूतानांपृथिव्यादीनांपंचानांअधिष्ठात्रीआधारशक्तिःस्वामिनीईश्वरीव्यापिनीयाचदेवीअपरेष्वखिलेषुभूतेषुविशिष्टेषुप्राणिषुवर्त्तमानानां
भूतानांप्राणिनांइन्द्रियाणांमनोनेत्ररसनघ्राणत्वक्कर्मणांवाधिष्ठात्रीतस्यैव्याप्तिरूपायैसततंनमोनमः॥ एतेनसर्वगतत्वंउक्तंदेव्याः ॥ ३६ ॥ चिञ्चयने ॥
चयनंचितिरविकारताकूटरूपतातद्रूपेण ॥ यद्वा ॥ चितिसंज्ञाने ॥ स्त्रियामिक्षुध्यादिभ्यइतिइक्प्रत्ययः ॥ चेतनंचितिः संज्ञानरूपेण यादेवीएतत्कृत्स्नं
अखिलंजगद्व्याप्यस्थिता तस्यैनमोनमः ॥ पुनःपुनर्नंतरनेककर्तृकत्वादनेकस्तोतृकत्वाच्चनपौनरुक्त्यंआर्थंशाब्दंवाशंकनीयं ॥ ३७ ॥ पूर्वंपुराकल्पेसुरैःस्तु
तातथाभीष्टसंश्रयादभीष्टस्यवस्तुनः संश्रयात्कारणात्॥ सुरेंद्रःशक्रःईशःशंकरःदिनेशःसूर्यःतैःसेविता॥अतएवभद्रमणतिभद्राणीअस्तुभद्रमितिकथयती॥
अतएवशुभहेतुः साईश्वरीनोस्माकंदेवानांशुभानिमंगलानिकरोतु ॥ किंच नःअस्माकंआपदश्चविरोधिजनितदुःखानिचाभिहंतु ॥ सुरेंद्रेणदिनेषुसेविते

चितिरूपेणयाकृत्स्नमेतद्व्याप्यस्थिताजगत्॥नमस्तस्यैनमस्तस्यैनमस्तस्यैनमोनमः॥३७॥स्तुतासुरैःपूर्वमभीष्टसं
श्रयात्तथासुरेंद्रेश दिनेशसेविता ॥ करोतुसानःशुभहेतुरीश्वरीशुभानिभद्राण्यभिहंतुचापदः॥३८॥यासांप्रतंचोद्धत
दैत्यतापितैरस्माभिरीशाचसुरैर्नमस्यते॥याचस्मृतातत्क्षणमेवहंतिनःसर्वापदोभक्तिविनम्रमूर्त्तिभिः॥३९॥ ऋषि
रुवाच ॥ एवंस्तवाभियुक्तानांदेवानांतत्रपार्वती॥स्नातुमभ्याययौतोयेजान्हव्यान्नृपनंदन॥४०॥ तिपाठेसुरेंद्रेणशक्रेणदिनेषु

प्रत्यहंसेविता ॥ शुभानिभद्राणीतिच्छेदे यानिनःशुभानिजगद्धितानिकर्माणिप्रार्थनीयानितानिभद्राण्यनुकूलानिअबाधानिअविघ्नानिकरोत्वित्यर्थः ॥
अभीष्टसंश्रयेतिपाठे ॥ अभीष्टःवांछितःसंश्रियमाणःसंश्रयइत्यर्थोयस्याःसकाशाद्भवतिसा ॥ ३८ ॥ सादेवीनःशुभहेतुरित्युक्तंसाकेत्याह ॥ यादेवीसांप्र
तमिदानींउद्धतदैत्यतापितैः निर्मर्यादैर्बलोल्बणैः दैत्यैःशुंभादिभिः तापितैःसंतापितैरस्माभिःसुरैरीशास्वामिनीनमस्यतेसेव्यते ॥ यादेवीभक्तिनम्रमूर्ति
भिःसुरैःस्मृताचस्मृतैवसतीतत्क्षणएवनोस्माकंसर्वाआपदः हंति ॥ सर्वापदोयतःस्युःतान्सर्वापदःशत्रून्वा ॥ ईशा पचाद्यच् इगुपधज्ञाप्रीकिरःको
वा ॥ सांप्रतमव्ययं ॥ भक्त्याविनम्रामूर्त्तयःकायायेषांतैः ॥ नमस्यतेइतिनमोवरिवश्चित्रङःक्यच् ॥ नमसःपूजायां भावकर्मणोःसार्वधातुकेयक् यस्य
हलः क्यस्यविभाषेतियलोपः॥ ३९ ॥ हेनृपनन्दनहेसुरथएवंइत्थंस्तवाभियुक्तानांस्तुतिपराणांदेवानामग्रतः तत्रहिमाद्रौपार्वतीदेवीजाह्नव्यागंगायाः तोये

हलः कयस्यविभापेतियलोपः ॥ ३१ ॥ हेनृपनन्दनहेसुरथएवंइत्थंस्तवाभियुक्तानांस्तुतिपराणांदेवानामग्रतः तत्राहिमाद्रिपार्वतीदेवी...

स्नातुंजलक्रीडांकर्तुमभ्यायथौ ॥ ४० ॥ सादेवानामग्रतःकिंकृतवतीत्याह ॥ सासुभ्रूःपार्वतीतान्देवान्पृष्टवती । किं हेसुराःअत्रहिमवत्पर्वतेभवद्भिः
कास्तूयते इति॥ शोभनेभ्रुवौयस्याःसा ततःतांपार्वतींप्रतितावद्देवैरेवोत्तरदानंउचितंकिंतुततःप्रागेवतस्याःशरीराद्विनिर्गत्यशिवामायादेवींपार्वतींप्रत्याह॥
कास्तूयते इति॥ शोभनेभ्रुवौयस्याःसा ततःतांपार्वतींप्रतितावद्देवैरेवोत्तरदानंउचितंकिंतुततःप्रागेवतस्याःशरीराद्विनिर्गत्यशिवादेवीपार्वतीप्रत्यब्रवीत् ॥
इयंब्रह्मादिसर्वदैवतेनोमयाशिवानामाव्याशक्तिरवसेया ॥ तथाहि ॥ अस्याःपार्वत्याःशरीरंकोशइवशरीरकोशःततउद्भूताशिवादेवीपार्वतीप्रत्यब्रवीत् ॥ यद्यस्मात्त
कोशोस्त्रीकुड्मलेखड्गपिधानेर्थौघदिव्ययोः ॥ ४१ ॥ ४२ ॥ किमब्रवीत्तदाह ॥ शुंभेनप्रत्यादिष्टैःसमस्तैर्देवैःममएतत्स्तोत्रंक्रियतेइत्यब्रवीत् ॥ यद्यस्मात्त
स्याःपार्वत्याःशरीरकोशादंबिकानिःसृतानिर्गता ॥ ततःकारणात्समस्तलोकेषुकौशिकीतिगीयतेकथ्यते ॥ कोशेनव्यतिनिर्गमनात्कौशिकी॥तेनदीव्यतीति

साऽब्रवीत्तान्सुरान्सुभ्रूर्भवद्भिःस्तूयतेऽत्रका ॥ शरीरकोशतश्चास्याःसमुद्भूताब्रवीच्छिवा ॥ ४१ ॥ स्तोत्रंममैतत्क्रि
यतेशुंभदैत्यनिराकृतैः ॥ देवैःसमस्तैःसमरेनिशुंभेनपराजितैः ॥ ४२ ॥ शरीरकोशाद्यत्तस्याःपार्वत्यानिःसृतांबि
का ॥ कौशिकीतिसमस्तेषुततोलोकेषुगीयते ॥ ४३ ॥ तस्यांविनिर्गतायांतुकृष्णाभूत्सापिपार्वती ॥ कालिकेतिस
माख्याताहिमाचलकृताश्रया ॥ ४४ ॥ ततोंबिकांपरंरूपंबिभ्राणांसुमनोहरं ॥ ददर्शचंडोमुंडश्चभृत्यौशुंभनिशुंभ
योः ॥ ४५ ॥ ताभ्यांशुंभायचाख्याताअतीवसुमनोहरा ॥ काप्यास्तेस्त्रीमहाराजभासयंतीहिमाचलं ॥ ४६ ॥

ठक् ॥ यद्वा ॥ कोशाद्यानिर्गतासाकोशेनिवृत्तैवेति निवृत्तेक्षद्यूतादिभ्यइतिठक् ॥ ४३ ॥ साभगवतीपार्वत्यपिस्वशरीरकोशात्तस्यांसर्वदेवतेजोमय्यांकौ
शिक्यांविनिर्गतायांसत्यांकृष्णाभूत्कृष्णवर्णासमजनिष्ट ततश्चसापार्वतीकालिकेतिसमाख्यातासतीहिमाचलेकृताश्रयाकृतनिलयाभूत् ॥ कृष्णवर्णार्था
त्कालशब्दात्तद्धितिवर्तमानात्संज्ञायांजानपदसूत्रेणङीप् ॥ संज्ञायांकन् ॥ केणइतिन्ह्रस्वः ॥ कालीहैमवतीश्वरी ॥ इहमहामायादेवकार्यार्थंविष्णुयोग
निद्राभूत् ततःपार्वत्यभूत्ततःकौशिक्यभूत्तत्सादेवकृतस्तुतिमंगीकर्तुंततःकालिकाभूत्सैवांबिकानामेत्याह ॥ ४४ ॥ ततोनंतरं ॥ यद्वा ॥ ततःतत्रहिमाच
ले आपादित्वात्तसिः ॥ शुंभनिशुंभयोःभृत्यौसेवकौचंडोमुंडश्चतौपरंअतितरांसुमनोहरंरूपंबिभ्राणामंबिकांकालिकाख्यांपार्वतींददर्श ॥ सुमनोहरांइतिपा
ठेदेवीविशेषणं ॥ चडिकोपे चंडतेचंडः ॥ मुडिखंडने मुंडतिमुंडयतिमुंडः ॥४५॥ सारूपवतीकालिकादेवीताभ्यांचंडमुंडाभ्यांशुंभायआख्याताचशुंभसम

क्षमुक्ता॥ किं हेमहाराजशुंभदैत्येश्वरसमधिगतसर्वैश्वर्यसावधानोभव॥अतीवसुमनोहराकापिस्त्रीआस्ते किंकुर्वंती हिमाचलंभासयंती स्वयंश्यामाश्यामा
भिःशोभाभिरदभ्रशुभ्रशोभाढ्यंहिमाद्रिंपार्वतीआस्ते ॥ आख्याताअतीवेत्यत्रवैवक्षिकंसंधिकार्यं ॥ शुंभायेतिक्रियाग्रहणंकर्त्तव्यमितिसंप्रदानत्वंपत्येशेते
इतिवत् ॥ सुष्ठुमनोहरतिसुमनोहरा ॥ हरतेरनुद्यमनेच् ॥ यद्वा ॥ इःकामःवसुनिधनेयेषांतेइवसवःकामधनाः तेषांमनःहरतिइतिइवसुमनोहरा अत्यर्थं
इवसुमनोहरा ॥ इत्यंबिकांप्रत्यनिष्टोर्थः तस्याःपातिव्रत्यभंगप्रसंगात् ॥ इष्टोर्थस्त्वेषः शोभनंमनोयस्यसुमनाः शंभुः तंहरति अर्धांगहरत्वात्सुमनोहरा॥
अतितरांसुमनोहरा ॥ यद्वा ॥ पैओवैशोषणे ॥ इंकामंवायतिशोषयतिइवःशिवः ॥ यद्वा ॥ इंकामंवातिगच्छतिइवःशिवः ॥ आतोनुपसर्गेकः ॥ इवस्य
सुमनोहरा अत्यधिकंसुमनोहराअतीवसुमनोहरा ॥ यद्वा ॥ इश्वकामःईचलक्ष्मीःवसवश्चाष्टौईवसवः अतिक्रांतईवसूनअतीवसुःशंभुः तस्यमनोहरा ॥

नैवतादृक्क्वचिद्रूपंदृष्टंकेनचिदुत्तमं ॥ ज्ञायतांकाप्यसौदेवीगृह्यतांचासुरेश्वर ॥४७॥ स्त्रीरत्नमतिचार्वंगीद्योतयंती
दिशस्त्विषा ॥ सातुतिष्ठतिदैत्येंद्रतांभवान्द्रष्टुमर्हति ॥ ४८॥ यानिरत्नानिमणयोगजाश्वादीनिवैप्रभो ॥ त्रैलोक्ये
तुसमस्तानिसांप्रतंतानितेगृहे ॥४९॥ ध्रुवोधरश्चसोमश्चह्यापश्चैवानिलोनलः ॥ प्रत्यूषश्चप्रभासश्चवसवोष्टौध्रुवादयः ॥४६॥ हेअसुरेश्वरशुं
भक्वचिदपिभुवनेकेनचिदपिपुंसातादृक्तादृशंउत्तमंअतिसुंदरंरूपंआकारःनैवदृष्टं नैवालोकि ॥ असौकापिदेवस्त्री॥यद्वा॥कापिकृताभिषेकाराज्ञीइतित्वया
ज्ञायतां ॥ अथत्वयासौगृह्यतांउपादीयतांचेतिअंबिकांप्रतिअनिष्टोन्वयः ॥ इष्टस्त्वेषः॥तादृगुत्तमंक्वाचिद्रूपंज्ञानरूपंक्वापिकेनचिद्दृष्टंन ॥ तस्मादसौदेवीका
पिपरदेवताइतित्वयाज्ञायतां ॥ असौकापिस्त्रीअबलास्तीतिनैवज्ञायतां ॥ अपित्वसौदेवीगृह्यतांचात्मसंरक्षणार्थंआश्रीयतामितिहितोपदेशः ॥ शुंभंप्रति
ताटस्थ्येन ॥ ४७ ॥ हेदैत्येंद्रत्विषादीप्त्यादिशःदशापिककुभःद्योतयंतीअंगकांत्याभासयंती ॥ अतिचार्वंगीअत्यंतंचारुमनोहरमंगंयस्याःसा ॥ स्त्रीरत्नं र
त्नंहिमनोहरत्वेनोत्कृष्टंसापुनरुत्कृष्टातिष्ठति तांभवान्द्रष्टुमर्हतीत्ययमंबिकांप्रत्यनिष्टोन्वयः ॥ इष्टस्त्वेषः ॥ हेदैत्येंद्रसानूनंस्त्रीरत्नंसानूनंअतिचार्वंगी
किंतयातेकृतंस्यात् तांभवान्द्रष्टुमर्हति ॥ यःतांदोषबुद्ध्यापश्येन्नश्येत्सतदैवतस्मात्तांद्रष्टुंभवान्मायततांइतिशुंभंप्रतिताटस्थ्येनहितोपदेशः ॥ रमंतेस्मि
न्नारत्नंरत्नमितिप्रख्यामणावेवनकेवलं ॥ जातौजातौयदुत्कृष्टंतद्रत्नमभिधीयते ॥ ४८ ॥ हेप्रभोशुंभयानित्रैलोक्येगजाश्वादीनितत्तज्जातिप्रधानान्युत्कृ

द्यानिरत्नानितथापद्मरागादयीमणयःरत्नानितानिसमस्तानितानिमधुनेतितवगृहेषु संतितत्प्रसिद्धमेतत् ॥ सांप्रतंप्रकृतमनुसरामः ॥ हेप्रभो कुतस्त्य
नात्तामानयितुंयतेथाश्चेत्तर्हियानित्रैलोक्येगजाश्वादीनिवैप्रसिद्धानिमणयश्चरत्नानिसंप्रतितेगृहेसंतितद्दर्शनोत्तरकालंतुनस्युः ॥ किंतुत्रैलोक्येएवतानियथा
स्थानंस्युरितिहितोपदेशः ॥ गजाश्वादिशब्दविवक्षितरत्नजातानिनामतोनिर्दशति ॥ ४९ ॥ गजोरत्नंइतिपाठः उत्तरत्ररत्नप्रधानान्यसूचनार्थः ॥ ग
जरत्नंइत्यपिपाठे रत्नानीतिवक्ष्यमाणरत्नोपसंहारवशात्सर्वत्ररत्नोपक्रमोप्यवगंतव्यः ॥ यःपुरंदरादैरावतोगजःसमानीतःतद्गजरत्नंतेगृहेवर्त्तते ॥ निर्दि
श्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयंतिसर्वनामानिपर्यायेणतल्लिंगभांजिभवंति ॥ एतिभ्राम्यत्यनयेतीरातद्वानिरावान्सुरासमुद्रः तत्रजातऐराव
तः ॥ पुराण्यरीणांदारयतिपुरंदरः ॥ गजइतिरत्नंगजरत्नं ॥ अयंचयःपुरंदरात्पारिजाततरुःसमानीतःतत्तरुरत्नंतेगृहेवर्त्तते ॥ पारिणःपारिवतोअब्धेर्जा

**ऐरावतःसमानीतोगजरत्नंपुरंदरात् ॥ पारिजाततरुश्चायंतथैवोच्चैःश्रवाहयः ॥५०॥ विमानंहंससंयुक्तमेतत्तिष्ठति**
**तेंगणे ॥ रत्नभूतमिहानीतंयदासीद्वेधसोद्भुतं॥५१॥निधिरेषमहापद्मःसमानीतोधनेश्वरात् ॥ किंजल्किनींददौचा**
**ब्धिर्मालामम्लानपंकजां ॥५२॥छत्रंतेवारुणंगेहेकांचनस्त्राविविष्ठति॥तथायंस्यंदनवरोयःपुरासीत्प्रजापतेः॥ ५३**

तः पारिजाताख्यःतरुः ॥ तथापुरंदरादेवयःउच्चैःश्रवाहयःसमानीतःतद्धयरत्नंतेगृहे ॥ उच्चैःश्रवसीयस्यसउच्चैःश्रवाः ॥ ५० ॥ हेप्रभो यत्तुवेधसः
ब्रह्मणःअद्भुतमाश्चर्यकारिविमानमासीत् हंसयुक्तंरत्नंभूतंरत्नत्वंप्राप्तंविमानंइहानीतंतत्तेगृहेतेंगणेतिष्ठति ॥ विविक्तंमांतिवर्त्ततेयत्रदेवाःविमानं ॥ व्योम
यानंविमानोस्त्री ॥ ५१ ॥ धनेश्वरात्कुबेराद्यएषमहापद्मोनामनिधिःसमानीतः तदेतन्निधिरत्नंतेगृहेवर्त्तते ॥ हेप्रभोतुभ्यंअब्धिःसमुद्रःकिंजल्किनीअ
विशीर्णकेसरां अवयवगतधर्मःकेसरवत्त्वंमालयाअपिपंकजारब्धत्वादवयवावयव्यभेदोपचारात्प्राप्नुवंतीकर्णस्थकुंडलेनकुंडलीतिवत्किंजल्किनीत्युक्तं
सर्वदाऽम्लानपंकजांअशुष्ककमलांमालांददौ ॥ उपचारतःकिंचिज्जलतिजडीभवतिकिंजल्कः ॥ ५२ ॥ हेभो यद्वारुणंवरुणसंबंधिकांचनस्त्राविछत्रंछ
त्ररत्नंतवगेहेतिष्ठतिनान्यत्र ॥ कांचनंसुवर्णंस्त्रवतिकांचनस्त्रावीतिव्याख्यानंउत्कर्षाभावादुपेक्षणीयं ॥ यस्यगेहेनिधयःसंतितस्यस्वर्णस्त्राविणाछत्रेणकिंस्या
त् ॥ कस्तर्हिविग्रहः कांत्याकांचनंस्वर्णंस्त्रवतीववर्षतीव ॥ यद्वा ॥ कांत्याकांचनवर्षीकल्पवृक्षः ॥ यद्वा ॥ कांचनकांतिमिवकांतिंस्त्रवति ॥ यद्वा ॥ कांचन

स्येवकांतिंलवतिकांचनलावि ॥ पृषोदरादित्वादीप्सितसिद्ध्याकांतिशव्दलोपः ॥ यद्वा ॥ कचिदीप्तिबंधनयोः ॥ कंचनंदीप्तिः प्रभा ॥ कांचनंदीप्तिःप्रभा कंचनमेवकांचनं ॥ अन्येषामपिदृश्यतइतिदीर्घः पूरुषवत् ॥ कांचनंदीप्तिंलवतितच्छीलं ॥ लावण्यलाविमुखंइतिवदुत्प्रेक्षितमेतत् ॥ कांचनंनामवैदिक निघंटुतःस्वार्णिकमंभःलवतीतितुव्याख्यानंकुशकाशावलंबनं ॥ अथद्वितीयोन्वयः ॥ हेप्रभो यद्वारुणंछत्ररत्नंकांचनलावितेगृहेस्ति ॥ कांचनलावीति सप्तम्येकवचनं गृहेइत्यस्यविशेषणं ॥ लुगतौ हेतुमतिचेतिणिचूण्यंतात्क्विप्ण्यल्लोपावियङ्यणगुणवृद्धिदीर्घेभ्यःपूर्वविप्रतिषेधेनेतिअकृत्वावृद्ध्यावादे शौणिलोपः ॥ ततःप्रत्ययलोपेप्रत्ययलक्षणंइतिवृद्धिः आवादेशस्तुवर्णाश्रयविधौप्रत्ययलक्षणान्नेष्यते ॥ पुंसि कांचनानांलौः कांचनानांप्रापयिता ॥ नपुंसकेतु ह्रस्वोनपुंसकेप्रातिपदिकस्य एचइग्घ्रस्वादेशे कांचनलुत्रपुशव्दवद्रूपं तृतीयादिषुभाषितपुंस्कंपुंवद्गालवस्येतिङौह्रस्वश्चनुम्चनभवति ॥ आ वादेशः ॥ कांचनलावि ॥ पक्षेकांचनलुणिगृहे ॥ हेप्रभोस्यंदनवरः अयमितिकोनुयःपुराकल्पेप्रजापतेर्ब्रह्मणःआसीत्तदिदंनामरथरत्नंत्वयासमानी

मृत्योरुत्क्रांतिदानामशक्तिरीशत्वयाहृता ॥ पाशःसलिलराजस्यभ्रातुस्तवपरिग्रहे ॥ ५४ ॥ निशुंभस्याब्धि
जाताश्चसमस्तारत्नजातयः ॥ वह्निश्चापिददौतुभ्यमग्निशौचेचवाससी ॥ ५५ ॥ ॥ छ ॥

तंस्यंदनेषुवरःश्रेष्ठः ॥ यानेचक्रिणियुद्धार्थेशतांगःस्यंदनोरथः ॥ ५३ ॥ हेईशस्वामिन्मृत्योरंतकस्ययाशक्तिरुत्क्रांतिदानामत्वयाहृता ॥ भुजिमृ ङ्भ्यांयुक्तुकौ ॥ मृत्युःस्त्रीपुंसयोरंते ॥ म्रियंतेस्मिन्नुपस्थितेतेप्राणिनइतिमृत्युः ॥ प्राणिनामायुषांतेयाप्राणाकर्षिणीशक्तिःसाउत्क्रांतिदोत्क्रांतिर्लिंगकाय विनिर्गतिः॥उत्क्रमणंउत्क्रांतिः तांददाति उत्क्रांतिदा ॥कासूसामर्थ्ययोःशक्तिर्देवतायामृषावपि ॥ हेशुंभतवभ्रातुः निशुंभस्यापिपरिग्रहेपरिजनेविषयेस लिलराजस्यवरुणस्यपाशःआयुधंवर्त्तते ॥ पत्नीपरिजनादानमूलशापाःपरिग्रहाः ॥ पाशोबंधनशस्त्रयोः ॥५४॥ किंचतेतवभ्रातुर्निशुंभस्यगृहेऽब्धिजातार त्नाकरसमुद्भूताः समस्तारत्नजातयश्चउत्तमरत्नप्रकाराःतिष्ठंति ॥ जातिःसामान्यजन्मनोः ॥ मुक्ताफलविद्रुमहरिन्मणिवज्रपद्मरागाद्यारत्नजातयः ॥ हेशुंभतुभ्यंवह्निश्चापिदेवः अग्निशौचेनामवाससीवसनेददौ ॥ अग्नौनिक्षेपतःशौचंयामलीकरणंययोस्ते ॥ कल्पवृक्षोपकल्पितं स्वर्णमयमग्निदेवताक मग्निनिक्षेपेणविमलात्मकंवासोयुग्ममग्निशौचंवासः ॥ ५५ ॥ ॥छ॥ ॥छ॥

मन्निनिक्षेपेणविमलात्मकंवासोयुग्ममग्निशौचंवासः ॥ ५५ ॥ ॥७॥

एषमुक्ताफलीस्याद्ऐरावतःसमानीतस्त्वयाप्यया हेदैत्येंद्र यदा हेदैत्य दैत्येंद्ररत्नानिइंद्रादिदेवानामैरावतादीनिरत्नानितुभ्यमाहृतानितदुपढौकितानितदुपहारीकृतानि॥ एषा चकल्याण्यंबिकास्त्रीरत्नंवर्त्ततेतत्कस्मात्कारणान्नगृह्यते ॥ अयंत्वम्बिकांप्रत्यनिष्टोर्थः ॥ अयंत्विष्टोर्थस्ततटस्थोक्तिसमाधिना ॥ हेदैत्येंद्रयद्यप्येव मैरावतादीनिरत्नानितुभ्यमाहृतानिदेवैःतथाप्येषांबिकातवकल्याणीशुभकारिणीन ॥ कुतःयतएषाभगवती ॥ त्वंअन्यंयातीतित्वया ॥ आतोनुपसर्गे कः ॥ अन्यगामिनीतिगृह्यतेज्ञायते ॥ त्वशब्दोन्यवाचिसर्वादिषुपठ्यते ॥ त्वंअन्यंमहेश्वरंयातित्वयाऽन्ययाऽन्यपत्नीमहेशपत्नीदैत्यसंहारिणीअतः शुम्भस्यशुभकारिणीन ॥ तस्मात्तच्चिंतांत्यजेतिहितोपदेशः ॥ ५६ ॥ महासुरःशुंभःतदाचण्डमुण्डयोरितिप्रागुपन्यस्तंवचःनिशम्यश्रुत्वासुग्रीवंनामदूतं संदेशहरंदेव्याःदेवींउद्दिश्यप्रेषयामास ॥ शाम्यतिर्निपूर्वः श्रवणार्थः ॥ इषगतौ प्रपूर्वःआद्गुणः ॥ देव्याइतिकर्मणिल्यब्लोपेपञ्चमी ॥ दूयतेऽनेनयथोक्त

एवंदैत्येंद्ररत्नानिसमस्तान्याहृतानिते ॥ स्त्रीरत्नमेषाकल्याणीत्वयाकस्मान्नगृह्यते ॥ ५६ ॥ ॥ ऋषिरुवाच ॥

निशम्येतिवचःशुंभःसतदाचण्डमुण्डयोः ॥ प्रेषयामाससुग्रीवंदूतंदेव्यामहासुरः ॥ ५७ ॥ ॥ शुंभउवाच ॥

इतिचेतिचवक्तव्यासागत्वावचनान्मम ॥ यथाचाभ्येतिसंप्रीत्यातथाकार्यंत्वयालघु ॥ ५८ ॥ ॥७॥

वादित्वात्परिताप्यतेपरइतिदूतः ॥ ५७ ॥ हेसुग्रीवहेदूतत्वयातत्रगत्वासास्त्रीममवचनादितिचइत्थंचेत्थंचसाम्नभेदेनचोपायेनवक्तव्या ॥ तथैवसासं प्रीत्याहर्षेणलघुक्षिप्रंअविलंबंअभ्येतिआभिमुख्येनागच्छति तथाकार्यंत्वयाविधेयं ॥ अयंत्वंबिकायामनिष्टोर्थः ॥ इष्टस्त्वयं ॥ अत्रापरेणमंत्रभेदबुद्धि समाधिनाख्यायतेर्थः ॥ हेदूतत्वयालघुक्षिप्रंतथाकार्यं मदभिप्रायादन्यत्वेनकर्त्तव्यं ॥ तत्कथं यथामयिविषयेअभिधमानंवचनं निंदायेषांतेअवचना असुराःतानत्तिउपसंहरत्यवचनात्असुरसंहारिणीत्यर्थः ॥ पुनःकिंभूतांबिका एतिगच्छतिविनश्यतिइत्तस्मिन्इति शुम्भेनिशुम्भेचविषये ॥ वक्तव्यासा वक्तव्यप्रतिक्षेपा ॥ असुक्षेपणे असनमासः ॥ वक्तव्योवचनीयः आसःप्रतिक्षेपोन्यक्कारोययासाव क्तव्यासा ॥ पुनःकिंभूता ॥ मम ममेत्यव्ययं मम शब्दोत्रमायावचनः निर्ममोयोगीसममःसंसारीतिवत् मायारूपेत्यर्थः ॥ पुनःकिंभूता ॥ संप्रीत्याप्रीङ्प्रीतौदिवादिःप्रीतिःप्रीःस्त्रियां सम्पदादित्वाद्भावे क्विप् ॥ समीचीनाप्रीःप्रीतिर्येषांतेसंप्रियोलुधाः ॥ ईयतेवश्यंप्राप्यतेतयोरुपासकैरित्यासंप्राप्या ॥ आदंतंरूपम् ॥ ५८ ॥ ॥७॥

ससुग्रीवोनामदूतः यत्रयस्मिन्नतिशोभनेशैलोद्देशेपर्वतप्रदेशेअसौदेव्यास्तेतिष्ठतितत्रगत्वाततःतदनंतरंतदेवींश्लक्ष्णंसमुचितंसंगतंसुकुमारंयथास्यात्तथा मधुरयाश्राव्याक्षरपदयागिरावाचाप्राहच शुम्भोदितसंदेशाभिप्रायगर्भसंदर्भमकथयत् ॥ प्राहेतिप्रशब्दउपसर्गप्रतिरूपकोनिपातः ॥ आहेतितिङंतप्र तिरूपकमव्ययं सामावृत्ति ॥ श्लक्ष्णंइतिश्लिष्आलिंगने ॥ श्लिषेरच्चोपधायाइतिक्स्नः ॥ कत्वषत्वे ॥ ५९ ॥ हेदेविसावधानभाव ॥ अस्तिखलुदैत्येश्वरः लोकत्रयेपरमउत्कृष्टईश्वरःस्वामीतेनशुम्भेनत्वत्सकाशंप्रतिप्रेषितःदूतःसंदेशहरोऽहंइहागतोस्मि ॥ दैत्यग्रहणंजातिख्यापनाय ॥ त्रैलोक्यग्रहणंदेव्याःप्ररो चनार्थं ॥ दूतग्रहणंतन्निग्रहपरिहाराय ॥ दूतोक्तंसदसद्वापिश्रुत्वाकार्यंहिताहितं ॥ दूतोननिग्रहीतव्यइतिनीतिविदोविदुः ॥ आदौदेवीत्युक्त्वाद्देव्याएव जयःसूच्यते यतः ॥ दीव्यतिविजिगीषतेदेवी ॥ हेदेवि तेनशुम्भेनदूतःप्रेषितःत्वत्देवीतःसशुम्भःकाशंतृणंगतःस्यान्नतुजयमित्यपिदेवीपारिषदोक्तिलेशो

सतत्रगत्वायत्रास्तेशैलोद्देशेतिशोभने ॥ तांचदेवींततःप्राहश्लक्ष्णंमधुरयागिरा ॥ ५९ ॥ ॥ दूतउवाच ॥ ॥ देवि दैत्येश्वरःशुंभस्त्रैलोक्येपरमेश्वरः ॥ दूतोहंप्रेषितस्तेनत्वत्सकाशमिहागतः ॥ ६० ॥ अव्याहताज्ञःसर्वासुयःस दादेवयोनिषु ॥ निर्जिताखिलदैत्यारिःसयदाहश्रृणुष्वतत् ॥ ६१ ॥ ममत्रैलोक्यमखिलंममदेवावशानुगाः ॥ यज्ञभा गानहंसर्वानुपाश्नामिपृथक्पृथक् ॥ ६२ ॥ नुसंधेयः ॥ ६० ॥ हेदेवियःसदासर्वदासर्वासुदेवयोनिषुविषयेषुअव्याहताज्ञःअप्रतिहतशासनः निर्जिताखिलदैत्यारिःनिर्जिताअभिभूताअखिलाःदैत्यारयःदेवायेन शुंभोयदाहतद्वचनंशृणुष्वाकर्णय ॥ व्यत्ययोबहुलमित्यात्मनेपदं ॥ व्येञ्संवरणे ॥ सं वरणमाच्छादनंक्विप् ॥ अंविष्णुंव्ययतिसंवृणोतिआच्छादयतिव्याप्नोत्यविद्यात्वेनेतिअवीर्विष्णुमायातयाअव्ययादेव्याआहताआज्ञास्यशुम्भस्यसःअव्या हताज्ञोभविष्यति ॥ निर्निश्चयनिषेधयोः ॥ निर्जिताअजिताअखिलादेवायेनसतथोक्तोभविष्यतीत्यपिदेवीपार्षदोक्तिलेशोप्यनुसंधेयः ॥ ६१ ॥ शुंभआ हेदं ॥ पटैकदेशेदग्धेपटोदग्धइत्यवयवेएकदेशेअप्यवयवीसमुदायोवर्त्ततेक्वचिदवयवावयविनोरभेदोपचारात्प्रयोगेषु तद्वत्त्रैलोक्यंममस्वंवर्त्ततेइत्युक्तेर्किं त्रैलोक्यंएकदेशवृत्याविवक्षितमिहेतिकस्यचिच्छंकास्यादतस्तामपनेतुमखिलमिति अखिलमित्येवकोकोकोऽखिलोभवत्यखण्डवृत्तित्वात्भुवनस्ये त्यतस्त्रैलोक्यमित्युक्तं ॥ इहममेतिविभक्तिप्रतिरूपमव्ययं मायावाचि निर्ममोयोगीतिवत् ॥ मममायादेव्याःत्रैलोक्यंइत्युक्तं ॥ मायायाअखिलंस्वंवर्त्तते

त्यतत्रैलोक्यमित्युक्तं ॥ इहममेतिविभक्तिप्रतिरूपमव्ययं मायावाचि निर्ममोयोगीतिवत् ॥ मममायादेव्याः त्रैलोक्यमित्युक्त ॥ मायायाअखिलस्यवर्तत

स्कुतःशुंभस्येत्यपिदेवीपार्षदोक्तिक्लेशोप्यनुसंधेयः देवाःममशुंभस्ययशानुगाः ॥ वशःकांतिरिच्छा ॥ मदिच्छामनुवर्तंतेमत्तुशुंभस्येत्यपिदेवीपार्षदोक्ति

शोनुसंधेयः ॥ तत्तद्देवतोद्देशेनपृथक्पृथक्विहितान्तान्सर्वान्यज्ञभागानाहुतिरूपान्यज्ञांशान्अहमेवशुंभःपृथक्पृथगिंद्रियादितत्तद्देवताकायप्रभृतिमुपा

श्रित्यउपाश्नामिउपभुंजे ॥ अश्भोजनेक्र्यादिः ॥ अहमितिविभक्तिप्रतिरूपमव्ययमविद्यावाचिअविद्यावाऽतस्मिंस्तद्बुद्धिः साचदेव्येवयज्ञभागानुपाश्ना

तीतिकुतःशुम्भस्ययज्ञभागोपभोगइत्यपिदेवीपार्षदोक्तिक्लेशोनुसंधेयः॥ ६२॥ त्रिषु पिलोकेषुवराणि श्रेष्ठानिरत्नानिस्त्रीरत्नानिममवश्यानिविधेयानि॥ वशंका

तिंइच्छांगतानीत्यर्थः॥वशंगतइतियत्प्रत्ययः॥ तथैवतद्देवबलवत्त्वतएव॥गजरत्नंदेवेंद्रवाहनं॥वाहनमाहितादितिणत्वंनात्रभवति॥आहितत्वस्याविवक्षित

त्वात् ॥ अत्रहिदेवेंद्रस्यवाहनमित्येतस्यस्वस्वामिभावसंबंधमात्रंविवक्षितत्वं ॥ यद्वाहनेआरोपितंयतोखिलंतदाहितमुच्यते ॥ इक्षुवाहणमित्यत्रइक्षवोवा

त्रैलोक्येवररत्नानिममवश्यान्यशेषतः ॥ तथैवगजरत्नंचहृतंदेवेंद्रवाहनम् ॥ ६३ ॥ क्षीरोदमथनोद्भूतमश्वरत्नंम ॥छ॥

मामरैः ॥ उच्चैःश्रवससंज्ञंतुप्रणिपत्यसमर्पितम् ॥ ६४ ॥ ॥छ॥

हनेआरोपिताइतिकृत्वाणत्वंभवति ॥ ६३ ॥ क्षीराण्युदकानियस्यसक्षीरोदःक्षिराब्धिः उत्तरपदे उदकस्योदःसंज्ञायांइत्यत्रसंज्ञायामुत्तरपदस्योदकशब्द

स्योदादेशोवक्तव्यः ॥ क्षीरोदस्यमथनंततउद्भूतंउच्चैःश्रवससंज्ञं ॥ श्रुगतौश्रुश्रवणे ॥ उच्चैःशृणोतिगच्छतिउच्चैःश्रवाःपचाद्यच् ॥ सहसंज्ञयाचेतनयाना

म्नाचवर्तते ससंज्ञः ॥ सहस्यसःसंज्ञायां वोपसर्जनस्येति ततःकर्मधारयः ॥ उच्चैःश्रवश्चासौससंज्ञश्चउच्चैःश्रवससंज्ञः ॥ अश्वविशेषणत्वेपुंल्लिंगः ॥ अ

श्वरत्नविशेषणत्वेतुनपुंसकलिंगंउच्चैःश्रवससंज्ञं ॥ अथवाप्रशस्तेश्रवसीयस्यसः श्रवसः मत्वर्थेअर्शआदित्वादच् ॥ जवेनमानेनचउत्कृष्टत्वादुच्चैरित्यु

च्यते ॥ उच्चैश्चासौश्रवसउच्चैःश्रवसइतिसंज्ञायस्यसः॥ अश्वरत्नविशेषणत्वेउच्चैःश्रवससंज्ञंतुमद्भीतैरमरैःप्रणिपत्यमत्पादपद्मेऽर्पितंउपायनीकृतं ॥ उपा

यनमुपग्राह्यउपहारस्तथोपदा ॥ अत्रापिमायावाचिममेत्यव्ययं ॥ मायादेव्यैअमरैर्भक्तिनम्रैरश्वरत्नंप्रणिपत्यसमर्पितंतत्त्रैलोक्येगृहेयस्यायत्क्वाप्यस्तुअयं

तुशुंभोन्यदीयंममेदमितिमुधाभिमन्यते ॥ इतिदेवीपार्षदोक्तिः ॥ ६४ ॥ ॥छ॥ ।छ॥

ससुग्रीवोनामदूतः यत्रयस्मिन्नतिशोभनेशैलोद्देशेपर्वतप्रदेशेअसौदेव्यास्तेतिष्ठतितत्रगत्वाततःतदनंतरंतदेवींश्लक्ष्णंसमुचितंसंगतंसुकुमारंयथास्यात्तथा मधुरयाश्राव्याक्षरपदयागिरावाचाप्राहच शुम्भोदितसंदेशाभिप्रायगर्भसंदर्भमकथयत् ॥ प्राहेतिप्रशब्दउपसर्गप्रतिरूपकोनिपातः ॥ आहेतितिङंतप्र तिरूपकमव्ययं सामावृत्ति ॥ श्लक्ष्णंइतिश्लिष्आलिंगने ॥ श्लिषेरच्चोपधायाइतिक्स्नः ॥ कत्वषत्वे ॥ ५९ ॥ हेदेविसावधानभाव ॥ अस्तिखलुदैत्येश्वरः लोकत्रयेपरमउत्कृष्टईश्वरःस्वामीतेनशुम्भेनत्वत्सकाशंप्रतिप्रेषितःदूतःसंदेशहरोऽहंइहागतोस्मि ॥ दैत्यग्रहणंजातिख्यापनाय ॥ त्रैलोक्यग्रहणंदेव्याःप्ररो चनार्थं ॥ दूतग्रहणंतन्निग्रहपरिहाराय ॥ दूतोक्तंसदसद्वापिश्रुत्वाकार्यंहिताहितं ॥ दूतोननिग्रहीतव्यइतिनीतिविदोविदुः ॥ आदौदेवीत्युक्त्वाद्देव्याएव जयःसूच्यते यतः ॥ दीव्यतिविजिगीषतेदेवी ॥ हेदेवि तेनशुम्भेनदूतःप्रेषितःत्वत्देवीतःसशुम्भःकाशंतृणंगतःस्यान्नतुजयमित्यपिदेवीपारिषदोक्तिलेशो

सतत्रगत्वायत्रास्तेशैलोद्देशेतिशोभने ॥ तांचदेवींततःप्राहश्लक्ष्णंमधुरयागिरा ॥ ५९ ॥ ॥ दूतउवाच ॥ ॥ देवि दैत्येश्वरःशुंभस्त्रैलोक्येपरमेश्वरः ॥ दूतोहंप्रेषितस्तेनत्वत्सकाशमिहागतः ॥ ६० ॥ अव्याहताज्ञःसर्वासुयःस दादेवयोनिषु ॥ निर्जिताखिलदैत्यारिःसयदाहश्शृणुष्वतत् ॥ ६१ ॥ममत्रैलोक्यमखिलंममदेवावशानुगाः ॥ यज्ञभा गानहंसर्वानुपाश्नामिपृथक्पृथक् ॥ ६२ ॥

नुसंधेयः ॥ ६० ॥ हेदेवियःसदासर्वदासर्वासुदेवयोनिषुविषयेषुअव्याहताज्ञःअप्रतिहतशासनः निर्जिताखिलदैत्यारिःनिर्जिताअभिभूताअखिलाःदैत्यारयःदेवायेन शुंभोयदाहतद्वचनंशृणुष्वाकर्णय ॥ व्यत्ययोबहुलमित्यात्मनेपदं ॥ व्येञ्संवरणे ॥ सं वरणमाच्छादनंक्विप् ॥ अंविष्णुंव्ययतिसंवृणोतिआच्छादयतिव्याप्नोत्यविद्यात्वेनेतिअवीविष्णुमायातयाअव्ययादेव्याआहताआज्ञास्यशुम्भस्यसःअव्या हताज्ञोभविष्यति ॥ निर्निश्चयनिषेधयोः ॥ निर्जिताअजिताअखिलादेवायेनसतथोक्तोभविष्यतीत्यपिदेवीपार्षदोक्तिलेशोप्यनुसंधेयः ॥ ६१ ॥ शुंभआ हेदं ॥ पटैकदेशेदग्धेपटोदग्धइत्यवयवेएकदेशेअप्यवयवीसमुदायोवर्त्ततेक्वचिदवयवावयविनोरभेदोपचारात्प्रयोगेषु तद्वत्त्रैलोक्यंममस्वंवर्त्ततेइत्युक्तेकिं त्रैलोक्यंएकदेशवृत्याविवक्षितमिहेतिकस्यचिच्छंकास्यादतस्तामपनेतुमखिलमिति आखिलमित्येवकेचित्पठंति पक्षेकोखिलोभवत्यखण्डवृत्तित्वाद्भुवनस्ये त्यतत्रैलोक्यमित्युक्तं ॥ इहममेतिविभक्तिप्रतिरूपमव्ययं मायायाचि निर्ममोयोगीतिवत् ॥ ममभायादेव्याःत्रैलोक्यंइत्युक्तं ॥ मायायाअखिलंस्वंवर्त्ततेत

त्यतस्त्रैलोक्यमित्युक्तं ॥ इहममेतिविभक्तिप्रतिरूपमव्ययं मायावाचि निर्ममोयोगीतिवत् ॥ ममभायादेव्याःत्रैलोक्यमित्युक्तं ॥ मायापा...

स्कुतःशुंभस्येत्यपिदेवीपार्षदोक्तिक्लेशोप्यनुसंधेयः देवाःममशुंभस्यवशानुगाः ॥ वशःकांतिरिच्छा ॥ मदिच्छामनुवर्तंतइत्यनुशुंभस्येत्यपिदेवीपार्षदो...

शोनुसंधेयः ॥ तत्तद्देवतोद्देशेनपृथक्पृथक्विहितानृतान्सर्वान्यज्ञभागानाहुतिरूपान्यज्ञांशानहमेवशुंभःपृथक्पृथगिंद्रियादितत्तद्देवताकायव्यूहमुपा

श्रित्यउपाश्नामिउपभुंजे ॥ अश्भोजनेक्र्यादिः ॥ अहमितिविभक्तिप्रतिरूपमव्ययमविद्यावाचिअविद्यावाऽतस्मिंस्तद्बुद्धिःसाचदेव्येवयज्ञभागानुपाश्ना

तीतिकुतःशुम्भस्ययज्ञभागोपभोगइत्यपिदेवीपार्षदोक्तिक्लेशोनुसंधेयः॥ ६२॥ त्रिषु लोकेषुवराणिश्रेष्ठानिरत्नानिस्त्रीरत्नानिममवश्यानिविधेयानि॥वशंका

तिंइच्छांगतानीत्यर्थः॥वशंगतइतियत्प्रत्ययः॥ तथैवतद्देवबलवत्त्वतएव॥गजरत्नंदेवेंद्रवाहनं॥वाहनमाहितादितिणत्वंनात्रभवति॥आहितत्वस्याविवक्षित

त्वात् ॥ अत्रहिदेवेंद्रस्यवाहनमित्येतस्यस्वस्वामिभावसंबंधमात्रंविवक्षितत्वं ॥ यद्वाहनेआरोपितंयतोखिलंतदाहितमुच्यते ॥ इक्षुवाहणमित्यत्रइक्षवोवा

त्रैलोक्येवररत्नानिममवश्यान्यशेषतः ॥ तथैवगजरत्नंचहृतंदेवेंद्रवाहनम् ॥ ६३ ॥ क्षीरोदमथनोद्भूतमश्वरत्नंम ॥छ॥

मामरैः ॥ उच्चैःश्रवससंज्ञंतुप्रणिपत्यसमर्पितम् ॥ ६४ ॥ ॥छ॥

हनेआरोपिताइतिकृत्वाणत्वंभवति ॥ ६३ ॥ क्षीराण्युदकानियस्यसक्षीरोदःक्षिराब्धिः उत्तरपदे उदकस्योदःसंज्ञायांइत्यत्रसंज्ञायामुत्तरपदस्योदकशब्द

स्योदादेशोवक्तव्यः ॥ क्षीरोदस्यमथनंततउद्भूतंउच्चैःश्रवससंज्ञं ॥ श्रुगतौश्रुश्रवणे ॥ उच्चैःशृणोतिगच्छतिउच्चैःश्रवाःपचाद्यच् ॥ सहसंज्ञयाचेतनयाना

म्नाचवर्तते ससंज्ञः ॥ सहस्यसःसंज्ञायां वोपसर्जनस्येति ततःकर्मधारयः ॥ उच्चैःश्रवश्चासौससंज्ञश्चउच्चैःश्रवससंज्ञः ॥ अश्वविशेषणत्वेपुँल्लिंगः ॥ अ

श्वरत्नविशेषणत्वेतुनपुंसकलिंगंउच्चैःश्रवससंज्ञं ॥ अथवाप्रशस्तेश्रवसीयस्यसः श्रवसः मत्वर्थेअर्शआदित्वादच् ॥ जवेनमानेनचउत्कृष्टत्वादुच्चैरित्यु

च्यते ॥ उच्चैश्चासौश्रवसउच्चैःश्रवसइतिसंज्ञायस्यसः॥ अश्वरत्नविशेषणत्वेउच्चैःश्रवससंज्ञंतुमर्द्दीतैरमरैःप्रणिपत्यमत्पादपद्मेऽर्पितंउपायनीकृतं ॥ उपा

यनमुपग्राह्यउपहारस्तथोपदा ॥ अत्रापिमायावाचिममेत्यव्ययं ॥ मायादेव्यैअमरैर्भक्तिनम्रैरश्वरत्नंप्रणिपत्यसमर्पितंतत्त्रैलोक्येगृहेयस्यायत्रकाप्यस्तुअयं

तुशुंभोन्यदीयंममेदमितिमुधाभिमन्यते ॥ इतिदेवीपार्षदोक्तिः ॥ ६४ ॥ ॥छ॥ ॥छ॥

हे शोभने देवि देवेषु वा गंधर्वेषु देवगायनेषु वा उरगेषु नागेषु वा यानि चान्यानि रत्नत्वमुत्कृष्टत्वं प्राप्तानि भूतानि शरीरभांजि मनोहराणि स्त्रीरूपाणि संति (तानि) सर्वाणि मय्येव विषये वर्त्तंते ॥ आः सखि शोभने गर्वस्थो ऽसावित्थमभूतवादी शुंभः शांभवीयं देव्येवभूतमयी भूतमित्थमाचष्ट यानि देवेषु गंधर्वेषु उरगेषु वा रत्नभूतानि रत्नतां प्राप्तानि भूतानि कृतानि सत्यानि तत्स्थानि संति तानि मय्येव देव्यामेव वर्त्तमानानि नान्यत्र ॥ अथवा इतो ऽन्यानि च यानि च रत्नभूतानि पृथिव्यादीनि संति तानि सर्वाणि विश्वरूपत्वेन विश्वमातृत्वेन मय्येव देव्यां वर्त्तंते न शुंभ इति देवीसखीजनोक्तिलेशो ऽप्यनुसंधेयः ॥ ६५ ॥ हे देवि लोके ऽस्मिन् रत्नभूतां भूलोके हिमालयनिवासिनीं मानिनीं त्वां स्त्रीरत्नभूतां स्त्रीरत्नजातां स्त्रीजात्युत्कृष्टां तां प्राप्तवतीं वयं शुंभनामानो मन्यामहे ॥ सा एवंविधा त्वमस्मानुपागच्छ प्राप्नुहि ॥ कुत इत्यत आह ॥ यतो वयं रत्नभुजो राजानः ॥ यदुक्तं ॥ स्वराष्ट्रमन्यतो रक्षत्यन्यदीयं क्षिणोति च ॥ वर्द्धंतो पायवान्नित्यं रत्नहारी स पार्थिवः ॥

यानि चान्यानि देवेषु गन्धर्वेषूरगेषु च ॥ रत्नभूतानि भूतानि तानि मय्येव शोभने ॥ ६५ ॥ स्त्रीरत्नभूतां त्वां देवि लोके मन्यामहे वयं ॥ सा त्वमस्मानुपागच्छ यतो रत्नभुजो वयं ॥ ६६ ॥ ॥छ॥ ॥छ॥

॥ देवीष्टार्थस्त्वेषः ॥ उपागच्छेत्यत्र उ पाः गच्छेति च्छेदः ॥ तत्र उ संबुद्धौ रुषोक्ते च शिववाचि त्वनव्ययं ॥ पा ने पिबतिः रक्षायां पातिः पायतिः शोषणे क्विप् ॥ पायति शत्रून् शोषयतिपाः उरिव रुद्र इव पा उपाः ॥ हे देवि कालाग्निरुद्र इव पायंती शत्रून् शोषयंती सती अस्मानिति शुम्भादीन् त्वामाकारयमाणान् शत्रून् शोषयितुं गच्छ याहीति देवीपार्षदोक्तिलेशो ऽप्यनुसंधेयः ॥ यद्वा ॥ असु क्षेपणे दिवादिः क्विप् ॥ अस्यत्यरीन् क्षिपत्यधिक्षिपति न्यक्करोति अः अत्वसंतस्य चेति उपधादीर्घः अधातोरिति प्रतिषेधान्न भवति पै ओ वै शोषणे पायंति शोषयंति लोकानिति पाः तेषां पां शुंभादीनां दैत्यानां अः आसिका क्षेपिका अधिक्षेपिका न्यक्कारिकेति पाः ॥ पा अः पाः उ इति संबुद्धावव्ययं उ हे देवि त्वं अस्मानुपागच्छेति शुंभादिभिः रत्नभुग्भिः दैत्यैराकारितासि ॥ सा त्वं पाः सति गच्छ पायतो जगंति श. ष. तः शुंभादीनस्यंती अधिक्षिपंती गच्छ याहि ॥ कुत इत्यत आह ॥ यतस्ते रत्नभुजः ॥ भुजो कौटिल्ये तुदादिः क्विप् ॥ भुजंति कौटिल्येन वर्त्तंते भुजः रत्नेषूत्कृष्टेषु विषयेषु भुजः कौटिल्येनान्यायेन वर्त्तमानाः रत्नभुजः अतः तेषां शुंभादीनां कुटिलानां न्यक्करणाय गमनं युक्तमुत्पश्यामः इतीति देवीपार्षदोक्तिः ॥ ६६ ॥





स०
अ
८

विषयेषुभुजःकौटिल्येनान्यायेनवर्त्तमानाःरत्नभुजःअतःतेषांशुंभादीनांकुटिलानांन्यक्करणायगमनंयुक्तमुत्पश्यामइतीतिदेवीपार्षदोक्तिः ॥ ६६ ॥

चलाचलःस्यात्तरलश्चंचलश्चपलश्चलः ॥ चंचलीनेत्रांतनिरीक्षणेनतरलीअपांगौनेत्रांतौयस्याःसाचंचलापांगी ॥ हेचंचलापांगिहेवरारोहेत्वंयतोरत्नभूता सिसौंदर्येणउत्कृष्टतांप्राप्तासिततोवैअनुनीयसे नररत्नमन्विष्यतिमृष्यतेहितादितिन्यायतःप्रार्थ्यसेततश्चमांनिशुंभंवाभजआश्रय ॥ उरुर्विक्रमःशौर्यंलक्ष णोयस्य तंममअनुजंकनिष्ठंभ्रातरंनिशुंभंवापिभजसंश्रय ॥ त्वंहिरत्नंरत्नभाजश्चराजानइवववंचराजानः तस्मात्त्वमस्मानेवभजनान्यानितिशुंभानुकू लेभिप्रायोयं ॥ वैस्यात्संबोधनेपादपूरणेनुनयेपिच ॥ देव्यनुकूलार्थस्त्वेषः ॥ सप्तम्यांजनेर्डः अन्येष्वपिदृश्यतेइत्यत्रसूत्रेअपिशब्दःसर्वोपाधिव्यभिचा रार्थः ॥ तेनधात्वंतरादपिडोभवतिकारकांतरेषूपपदेचेतिवचनात्पिषृसंचूर्णनइत्यस्मादाङ्पूर्वाच्चंचलोपपदात्डःटिलोपःसाचंचलान्यायादपभ्रष्टान्दैत्या नासमंतादभिव्याप्यपिनष्टिसंचूर्णयतिइतिचंचलापंअंगंगात्रंयस्याःसाचंचलापांगी ॥ अंगगात्रकंठेभ्यश्चोपसंख्यानाद्वाङीप् ॥ हेचंचलापांगिहेदुष्टदैत्यो पसंचूर्णनसन्नद्धगात्रेएवंविधात्वंशुंभेनआकारितासिकिंमितिमांवाअनुजंनिशुंभंवाभजेत्याहूतासि यतश्चत्वंरत्नभूतासिवैअनुनीयसेप्रार्थ्यसेचततः ॥ त्वं

मांवाममानुजंवापिनिशुंभमुरुविक्रमं ॥ भजत्वंचंचलापांगिरत्नभूतासिवैयतः ॥ ६७ ॥

मांवेतिशुंभंअमगच्छयाहिअनुजंवापीति निशुंभंअमगच्छयाहिअमइत्येतदमगतावित्यतोम्वादेर्लोटिरूपं तच्च मां वा॥अममा अनुजंइतिपदच्छेदात्क्रियते किंविशिष्टात्वंमा॥मःशिवोवारमायांचमानिषेधेव्ययंमतं ॥मंशिवंशंभुंअसतिगच्छतिशंभुनासहदीव्यतिचेतिविगृह्यअसगतिदीप्त्यादानेष्वित्यसतेःपूर्ववद पिशब्दविहितोडःडितिटेरस्शब्दस्यलोपःस्त्रियांमाइतिरूपं ततश्चतादृशीशांभवीचंचलापांगीदुष्टदैत्यसंहारसज्जांगीसतीत्वमुरुविपुलंयथास्यात्तथाशुंभा दिषुविषयेषुविक्रमंभजशौर्यंसमाश्रयेतिदेवीपार्षदोक्तिलेशोप्यनुसंधेयः ॥ यद्वा ॥ चंचलापांगि रत्नभूतासि वा ऐ यतः इतिच्छेदः ॥ एकारउच्यतेविष्णुरैका रःस्यान्महेश्वरः ॥ ममेतिमायावाच्यव्ययं ॥ यतीप्रयत्नेयतनंयत् स्त्रियांभावेसंपदादित्वाद्वाक्विप् ॥ ऐमहेश्वरस्येवकालाग्निरुद्रस्येवयतंयत्नंप्राप्यहेममहेमाये देविमांहंतुंनिशुंभंचहंतुंमहांतंविक्रमंपादविक्षेपंपराक्रमंवाभजेतिदेवीपार्षदोक्तिः ॥ चंचलान्न्यायादपभ्रष्टानपकर्तुंहिंसितुंअंगतिप्राप्नोतितच्छीलाचंच लापांगी अगिर्गत्यर्थः ॥ रत्नभूतश्चासावसिश्चेतिरत्नभूतासिः ॥ चंचलापांगि रत्नभूतासि वा (?) वागतिगंधनयोः आतोनुपसर्गेकः ॥ ६७॥ ॥७॥

हेदेवित्वंममशुंभस्यपरिग्रहात्पत्नीत्वेनस्वीकारादतुलमनुपमंपरंश्रेष्ठंऐश्वर्यंपरमेषुश्रेष्ठेषुस्वामिनांचप्राप्स्यसि ॥ व्यत्ययेनात्मनेपदं ॥ यद्वा ॥ मयाशुंभेनत्वं
परमैश्वर्यंप्राप्स्यसेप्रापयतेःकर्मणिलुटिथासःसेरूपं ॥हेदेविएतत्सर्वंप्रागुक्तंशुंभाभिप्रायगर्भंबुद्ध्यासमालोच्यविचार्यमत्परिग्रहतांव्रजप्राप्नुहि॥परिग्रहःपरि
जनेपत्न्यांस्वीकारमूलयोः ॥ यदाहुः ॥ पत्नीपरिजनादानमूलशापाःपरिग्रहाः ॥ इतिशुंभानुकूलोर्थः ॥ देव्यनुकूलोर्थस्त्वेषः ॥ हेदेवित्वंपरमासर्वोत्कृष्टा ॥
यद्वा ॥ पराउत्कृष्टामालक्ष्मीःत्वमेवेतिअतुलऐश्वर्यंप्राप्स्यसीतियत्सत्यमेवैतत् ॥ किंचित्रं ॥ किंचमत्परिग्रहात् ॥ मदिहर्षेमाद्यतिमद्क्विप् ॥यःमद्माद्यन्प
रिग्रहःमातृमुख्यःपरिवारः तंप्राप्यपरमैश्वर्यंप्राप्स्यसेइत्येतदपिसिद्धमेवैतत् ॥ मत्परिग्रहादितिकर्मणिल्यब्लोपेपंचमी ॥ हेदेवित्वंएतद्बुद्ध्यासमालो
च्यमाद्यत्परिग्रहोमातृमुख्यःपरिजनोयस्याःसामत्परिग्रहातस्याःभावःमत्परिग्रहतातांव्रजप्राप्नुहि ॥ यःखल्विमाश्चित्रागावोमेसंतीत्यादौबुद्ध्यासमालोचते

परमैश्वर्यमतुलंप्राप्स्यसेमत्परिग्रहात् ॥ एतद्बुद्ध्यासमालोच्यमत्परिग्रहतांव्रज॥६८॥ ऋषिरुवाच ॥ इत्युक्तासा
तदादेवीगंभीरांतःस्मिताजगौ ॥ दुर्गाभगवतीभद्राययेदंधार्यतेजगत् ॥ ६९ ॥ देव्युवाच ॥ सत्यमुक्तंत्वयानात्रमि
थ्याकिंचित्त्वयोदितं ॥ त्रैलोक्याधिपतिःशुंभोनिशुंभश्चापिताद्दशः॥७०॥ सएवंचित्रगुतांप्राप्नोतितद्वदियमपिदेवीप्रेमतःआत्मनो

मन्माद्यन्परिग्रहोस्तीतिबुद्ध्यासमालोच्यपश्चान्माद्यत्परिग्रहतांव्रजतीतिदेवीपार्षदोक्तिः॥ त्वतलोर्गुणवचनस्यपुंवद्भावोवक्तव्यः॥६८॥ततःसंदेशश्रवणस
मयइत्येवंशुंभेनदूतद्वाराउक्ताकथिता ॥ देवीगंभीराअगाधाभिप्रायादैत्यान्हंतुकामाअतएवांतःस्मिता ॥ शुंभोदुरात्मामांप्रतिदेवतांइत्थमाहेतिसोत्प्रासमं
तस्तंभितहासातंहंतुमनाः सतीजगौ ॥ दूतंवाचमुचितामूचेऽकथयत् ॥ दुर्गादुरवगाहा ॥ भगवतीसमग्रैश्वर्यरूपा ॥ भद्राक्षेमरूपा ययाइदंजगद्धार्यते गै
शब्देआतऔणऊः ॥ अयंभावःइतिदूतेनव्यभिचारिभावेनउक्तापिदेवीनसाअसाताद्दशीनाभूत् अतिपतिव्रताशुंभादिभिःसहरंतुकामानाभूत् ॥ किंतुअ
तदाकालांतरेहंतुकामैवाभूत् ॥ ६९ ॥ अत्रशुंभेपिविषयेसत्यंउक्तंहेदूतअत्रत्वयामिथ्यापदंकिंचिन्नउदितंनउक्तं ॥ तथाहि ॥ शुंभस्त्रैलोक्याधिपतिर्भवति
निशुंभेपिचताद्दशःशुंभसद्दशएव ॥ मिथ्येत्यस्यार्थं ॥ [illegible] ॥ अयेनशुभावहविधिनाअनःअयानःहेअया

नदूत त्वयात्रास्यांपतिव्रतायांदेव्यांविषयेयदसंभावितेकिंचिन्मिथ्याउदितंउक्तंशुंभंनिशुंभंवाभजेतितत्तुसत्यमुक्तंहीनं ॥ त्रैलोक्याधिपतिःशुंभइतियत् ॥

नदूत त्वयात्रास्यापतिव्रतायादेव्याविषयेयदसंभावितांकांचिन्मिथ्याउदितंउक्तंशुंभनिशुंभवाभजेततनुसत्यमुक्तंहि ॥ [illegible]

एतत्सत्यंयतःशुंभः त्रैलोक्यस्याधेर्मानसपीडायाःपतिःउत्पादकत्वेनस्वामीयतश्चसतादृशएवनिशुंभोपि ॥ पुंस्याधिर्मानसीव्यथा ॥ त्रैलोक्यस्याधिप
तिरियंदेव्येवेतिदेवीपार्षदाभिप्रायतः सोत्प्रासतावसेया ॥७० ॥ किंवितर्कंपरिप्रश्नेक्षेपेनिंदाप्रकारयोः ॥ किमव्ययंवितर्केनुनुस्यान्नेदेवधारणे ॥ शुंभत्रै
लोक्याधिपतिःसत्यंकिंत्वत्रास्मिन्शुंभेपत्यावाश्रयितव्येविषयेममविचारोस्तिपृथक्प्रतिनियतः ॥ मयायत्प्राक्प्रतिज्ञातंततत्किंमिथ्याक्रियते ॥ मयादेव्या
ऽल्पबुद्धित्वादनालोच्यपुराबाल्यकालेयाप्रतिज्ञाकृतासात्वयादूतेनश्रूयतां ॥ कृतामयेतिवापाठः ॥ अतसातत्यगमने ॥ अल्पबुद्धित्वंअततिसततंगच्छति
सदाप्नोतीति अल्पबुद्धित्वात् क्विपिरूपं ॥ संबुद्धौ हेअल्पबुद्धित्वात्हेस्वल्पधिषणहेदूतत्वयोक्तंशुंभंनिशुंभंवाभजेति तत्रयाप्रतिज्ञाभर्त्तरिविषयेकृतासा
श्रूयतां साचेत्घटेत्मेभर्त्ता ॥ अन्यथायन्मयाप्रतिज्ञातंतन्नस्यात् ॥ मानिनोनिरयंयांतियावदाभूतसंप्लवं ॥ ७१ ॥ कासौप्रतिज्ञा ॥ जिअभिभवे जिज

किंत्वत्रयत्प्रतिज्ञातंमिथ्यातत्क्रियतेकथं ॥ श्रूयतामल्पबुद्धित्वात्प्रतिज्ञायाकृतापुरा ॥७१ ॥ योमांजयतिसंग्रामे
योमेदर्पंव्यपोहति ॥ योमेप्रतिबलोलोकेसमेभर्त्ताभविष्यति ॥ ७२ ॥ तदागच्छतुशुंभोत्रनिशुंभोवामहासुरः ॥
मांजित्वाकिंचिरेणात्रपाणिंगृह्णातुमेलघु ॥ ७३ ॥ ॥छ॥ ॥छ॥

ऊहवितर्केआत्मनेपदी
येइत्ययंत्वकर्मकः ॥ योमेदर्पंगर्वंव्यपोहतिद्रावयतिदूरीकरोति ॥ दृपोहर्षणमोहनयोः ॥ गर्वोभिमानोहंकारोदर्पोहंकारसूर्ययोः ॥ ऊहवितर्केआत्मनेपदी
उपसर्गादस्यत्यूह्योर्वावचनमितिपरस्मैपदं ॥ योमेदेव्याःप्रतिबलोलोकेअधिबलःसबलःस्यात्प्रतिबलःविपक्षःप्रतियोगीवास्यात्समेभर्त्ताभविष्यतीतिप्रति
ज्ञास्वरूपं ॥ लोकेजयंतीअभिभवित्रीशक्तिरियमेवनैतांकोपिनेतुंशक्नोति ॥ लोकेदर्पात्माऽहंकाररूपाशक्तिरियमेवनैतांकोपिप्रच्यावयितुंशक्नोति ॥ लो
केवलरूपाशक्तिरियमेवनैतांकोपिप्रच्यावयितुंशक्नोति ॥ इत्यभिप्रायेणप्रतिज्ञातमित्थंदेव्या ॥ यःसंग्रामेतुल्येसंसारग्रामेमांलक्ष्मींसंपदंजयतिपरमवैरा
ग्ययोगादभिभवति ॥ योऽमेऽलक्ष्मींकेदैत्यवर्गेदर्पंहर्षणंगर्वंचव्यपोहति ॥ योलोकेमेदेव्याअप्रतिबलःअप्रतिपक्षःअनुकूलःसमहेश्वरोमेभर्त्ताधारकः पोष
कश्चनान्यइतिदेव्याःपरमोभिप्रायोयंदेवीपार्षदैःसहृदयैरूहितः ॥ ७२ ॥ पाणिग्रहणंकरोतु ॥ तयोरन्यतरः ॥ अत्रमत्प्रतिज्ञापरिपालनेचिरेणकालेनकिंसा
ध्यंकिंविलंबेनकृतंस्यात् ॥ आदानस्यप्रदानस्यकर्त्तव्यस्यचकर्मणः ॥ क्षिप्रमक्रियमाणस्यकालःपिबतितत्फलं ॥ मत्पाणौप्रभुशत्रुः तत्फलंद्रक्ष्यतिसःइति

देव्याशयः ॥ तत्तस्मात्प्रतिज्ञातः कारणाच्छुंभोनिशुंभोवाआगच्छतु ॥ तेनकिंस्यात्तदनादृत्यजित्वाजेतात्रैलोक्यविजयीमहानसुरःमहासुरःमहादेवःमां गृह्णातुअत्रमद्ग्रहणेकिंचिरेणेतिदेव्याःपरमाभिप्रायंदेवीसख्यःस्वस्वचेतःसुऊहंते ॥ जिअभिभवेअन्येभ्योपिदृश्यतइतिक्वनिपिन्हस्वस्यपितिकृतितुगाग मः॥नांतः॥चिरेणातिकालेनअव्ययंचानव्ययंचेदं ॥७३॥ लिपउपदेहेउपदेहउपचयः॥अवपूर्वस्तुलिपिर्गर्वेवर्त्तते॥यदभ्यंधुः॥गर्वोभिमानोहंकारोमानश्चित्त समुन्नतिः॥दर्पोवलेपोऽहंताच॥ हेदेवित्वंअवलिप्तासिमैवंभूः एवंगर्वितामाभूः ॥ त्वंममाग्रेएवंयदवोचः योमांजयतिसंग्रामेइत्यादि तदागच्छतुशुंभोत्रेत्या दिचेतिप्रतिज्ञाव्याजेनखलुत्वंकेवलमहमहमिकामवोचोमैवंब्रूहि॥कुतइत्याह ॥ त्रैलोक्येशुंभनिशुंभयोरग्रेयोद्धुकामःकःपुमांस्तिष्ठेत्नकोपि ॥ अबलात्वंयो त्स्यसेइतिकाकथा ॥ इतिशुंभानुकूलोभिप्रायः ॥ अवलिप्तानूसगर्वान्दैत्यानस्यतिअधिक्षिपतिअवलिप्तासि ॥ असुक्षेपे ॥ कर्मण्यणिटिड्ढाणञ्सूत्रेण

॥ दूतउवाच ॥ ॥ अवलिप्तासिमैवंत्वंदेविब्रूहिममाग्रतः ॥ त्रैलोक्येकःपुमांस्तिष्ठेदग्रेशुंभनिशुंभयोः ॥७४॥ अ न्येषामपिदैत्यानांसर्वेदेवानवैयुधि ॥ तिष्ठंतिसंमुखादेविकिंपुनःस्त्रीत्वमेकिका ॥ ७५ ॥ इंद्राद्याःसकलादेवास्तस्थु र्येषांनसंयुगे ॥ शुंभादीनांकथंतेषांस्त्रीप्रयास्यसिसंमुखं ॥ ७६ ॥ ॥छ॥ ॥छ॥

ङीपिरूपंतत्संबुद्धौहेअवलिप्तासि हेमदोद्धतमर्द्दिनि यतः त्वंमालक्ष्मीः अतोममाग्रहतःसखीजनस्यपुरतःएवंब्रूहियोमांजयतिसंग्रामेइत्यादित्रैलोक्येअग्रेपु रोभाविसंग्रामेशुंभनिशुंभयोर्मध्येकःपुमान्त्वयासमंयोद्धुंतिष्ठेदपितुनकोपि॥ यदातदग्रेशुंभनिशुंभयोःसंबंधी कःपुमान्योद्धुकामःतिष्ठेन्नकोपिइतिदेव्याः सखीजनाशयोनुसंधेयः ॥ ७४ ॥ हेदेविहेभव्येअन्येषामपिशुंभव्यतिरिक्तानांदैत्यानांधूम्रलोचनप्रभृतीनांयुधिसर्वेदेवायोद्धुकामाःसंमुखानतिष्ठंति॥ किंपु नःत्वंएकिकाअबलादैत्यानांपुरतःयोद्धुमक्षमेतिकिंपुनर्वक्तव्यंइतिशुंभानुकूलोर्थः ॥ हेदेविअन्येषामपिदैत्यानांसंमुखायुधिसर्वेदेवानतिष्ठंतिचेत्मातिष्ठंतु॥ त्वंपुनःत्वंतुस्त्रीसत्यपिसमस्तशक्त्यधिदेवतारूपाएकाकिन्येवअसहायशूरा॥योद्धुमन्येषांदैत्यानांसंमुखीकिंनतिष्ठसिअपितुयोद्धुंसंमुखीतिष्ठस्येवेतिदेवीस खीजनाभिप्रायोनुसंधेयः ॥ वैस्यात्संबोधनेपादपूरणमुभयोपिच ॥ एकाकीत्वेकएकलः ॥ ...स्यस्थलस्कालपूर्वस्यातइदाप्यसुपः॥७५॥ हेदेवियेषांसंयुगेइंद्रा द्याःसर्वेदेवाःसंमुखाःनतस्थुःनतस्थिवांसः॥तेषांशुंभादीनांदैत्यानांसंमुखंत्वंस्त्रीअबलायोद्धुंकथंप्रयास्यसिअभिगमिष्यसि ॥ विवाहनिमित्तप्रतिज्ञापालनाय

याःसर्वेदेवाःसंमुखाःनतस्थुःनतस्थिवांसः॥तेषांशुंभादीनांदैत्यानांसंमुखंत्वंस्त्रीअबलायोद्धुंकथंप्रयास्यसिआगमिष्यसि ॥ विवाहेनिमित्तप्रतिज्ञापालनाय

अपितुयुद्धंविनैवशुंभेनाहूतात्वंतंभजस्व इतिशुंभानुकूलोर्थः ॥ देवीसखीजनाभिप्रायेणतु ॥ यथा ॥ हे

शुंभादिभिःसहस्त्रियास्तवयुद्धंनघटते ॥ ... ॥ त्वंसकलाकलाभिः

देवित्वंइंद्राद्याः आसउपवेशनेकर्त्तरिक्विप्आस्तआः सांतःइंद्रादिषुआःआसीनाःइंद्राद्याः इंद्रादिभिर्देवैर्ध्याता सतीतिष्वासीनासि ॥ त्वंसकलाकलाभिः देवाःविजिगीषमाणा

सहवर्त्तमाना ॥ हेदेवि त्वंदेवाःसांतं ॥ दिवुक्रीडाविजिगीषादौ सर्वधातुभ्योऽसुन् ॥ दीव्यतिदेवाः अत्वसंतस्येत्युपधादीर्घः देवाःविजिगीषमाणा

सहवर्त्तमाना ॥ हेदेवि त्वंदेवाःसांतं ॥ यसुप्रयत्नेणिच् ॥

सि ॥ पुनःकथंभूतात्वं येषांशुम्भादीनांसंयुगेइन्द्राद्याःनतस्थुःतेषांस्त्रीप्रयासीअसिस्त्रीःप्रयासंतीभर्तृविनाशाजनितदुःखाःकुर्वंती ॥ सम्भवत्येकवाक्यत्वेवाक्यभेदस्तुनेष्यते ॥ अर्थांतरेवि

कर्मण्यण्ङीप् ॥ एवंविधासि ॥ तेषांसंयुगेसंमुखंकथंनस्थास्यसिअपितुयोद्धुंप्रयास्यसिइति ॥ सम्भवत्येकवाक्यत्वेवाक्यभेदस्तुनेष्यते ॥ अर्थांतरेवि

कर्मण्यण्ङीप् ॥ एवंविधासि ॥ तेषांसंयुगेसंमुखंकथंनस्थास्यसिअपितुयोद्धुंप्रयास्यसिइति ॥ एतावतातेषांशुम्भादीनांसंमुखेयो

विक्षायांवाक्यभेदोनदुष्यति ॥ यद्वा ॥ हेदेवि इन्द्राद्याःसकलादेवाःयेषांशुम्भादीनांसंयुगेसंमुखंनतस्थुःस्थातुंनशेकुःएतावतातेषांशुम्भादीनांसंमुखेयो

द्धुंविजेतुंत्वंकथंनप्रयास्यसि ॥ इतिदेवीसखीजनाभिप्रायः ॥ यद्वा ॥ तस्थुः या ईषां इतिच्छेदः ईषगतिहिंसादर्शनेषुभ्वादिरात्मनेपदीकर्तरिक्विप् ॥

सात्वंगच्छमयैवोक्तापार्श्वंशुंभनिशुंभयोः ॥ केशाकर्षणनिर्द्धूतगौरवामागमिष्यसि ॥ ७७ ॥

ईषंतेहिंसंतिईषःहिंसकाःतेषांईषांहिंसकानांशुम्भादीनांसंयुगेइन्द्राद्याःनतस्थुःतेखलुभीरवः ॥ हेदेवियात्वंत्र्यपिसर्वशाक्तरूपावतीर्णासि ॥ साभगवती

त्वंतेषांसंमुखंकथंनप्रयास्यसियोद्धुंअपितुप्रयास्यस्येवेति ॥ ७६ ॥ हेदेविसात्वंप्रागुक्तप्रतिज्ञापालनपटीयसीविवोढुमनाःमयादूतेनउक्ताकथितैवसती ॥

यद्वा ॥ त्वद्गौरवाभिवांछिनामयादूतेनउपादिष्टासतीप्रतिज्ञाभंगभयंपरित्यज्यानपत्रपासतीशुम्भनिशुम्भयोःपार्श्वंगच्छ ॥ यतःत्वंइत्थंसदुपदेशमाश्रयं

तीकेशाकर्षणनिर्द्धूतागौरवासतीमागमिष्यसि ॥ माइत्यङिद्व्ययंनिषेधार्थकं अन्यथामाङिलुङ् स्यात् ॥ केशानांशिरोरुहाणामाकर्षणेननिर्द्धूतंकम्पि

तंअपास्तंअपनीयंगौरवंगुरुत्वंबहुमान्यत्वंयस्याःसा इत्थंभूतासतीनागमिष्यसि ॥ अन्यथात्वंमदुपदेशपराङ्मुखीसतीप्रतिज्ञांपालयितुंसंग्रामंकर्तुका

मापितमलभमानात्रैवासीनाकेशपाशाकर्षणापाकृतबहुमान्यतासती बलादाकृष्यमाणा शुम्भनिशुम्भयोःपार्श्वंगमिष्यसिइतिशुम्भानुकूलोर्थः ॥ देवी

सखीविवक्षितस्त्वन्यएव यथा ॥ हेदेविसात्वंदुरात्मनादूतेनइत्थंउक्ताऽतएवसंजातक्रोधासतीमयासख्यासहशुम्भनिशुम्भयोःपार्श्वंगच्छ ॥ ततःतयोःके

शाकर्षणनिर्द्धूतगौरवाशुम्भनिशुम्भयोःकेशानामाकर्षणेननिर्द्धूतंनिरस्तंगौरवंदैत्येश्वरत्वंययासा ॥ तृतीयार्थेबहुव्रीहिः ॥ एवंविधात्वंपुनरपिअमासखीजन

स्यसमीपमागमिष्यसीति ॥ अमासहसमीपे च ॥ त्यक्तंहीनंविधुतंसमुज्झितंधूतमुत्सृष्टे ॥ गौरवान्नागमिष्यसीतिपाठेतु ॥ हेदेविमयात्वद्गौरववांछि
नादूतेनउपदिष्टासती मत्पार्श्वेइतिपाठेद्वितीयाद्विवचनांतं ॥ मद्वचनाच्चेन्नगछेःतर्हिगौरवाद्बहुमानान्नागमिष्यसिकिंतुकेशाकर्षणनिर्धूताआगमिष्यसि ॥
निर्निश्चयनिषेधयोः ॥ निर्द्धूताअत्यक्ताकेशाकर्षणेननिर्द्धूताबद्धागृहीताबन्दीकृतासत्यपमानादागमिष्यसि ॥ गौरवात्तुनागमिष्यसि ॥ इतिशुम्भानुकूलो
र्थः ॥ देव्यनुकूलस्त्वेषः ॥ हेदेविकृतप्रतिज्ञात्वंतेनदुरात्मनाशुम्भेनमांभजेत्युक्तासतीअतःसक्रोधा मयासख्यासहशुम्भनिशुम्भयोःपार्श्वंहननायगच्छ ॥
ततश्चतयोःनिर्द्धूतमत्यक्तंनिगृहीतंकेशाकर्षणंययासा ॥ आहिताग्न्यादित्वादग्न्याहितइतिवन्निष्ठांतस्यपरनिपातः ॥ निर्द्धूतशत्रुकेशाकर्षणासतीअत्यक्तके
शाकर्षणासत्यगौरवान्नागमिष्यसि ॥ गौरवादेवसन्मानादेवनिजस्थानंपुनःआगमिष्यसिइतिदेवीसखीजनाभिप्रायः ॥ गौरवादागमिष्यसीतिवापाठः॥
॥ यद्वा ॥ कःब्रह्माअश्चविष्णुःईशश्चमहेशःकेशाःतेषामाकर्षणंध्यानेनवशीकरणंह्यवस्थापनंतवधूतंत्यक्तं निर्निषेधेनिर्द्धूतंअत्यक्तंकेशाकर्षणंयैःऋषिभिःते

॥ देव्युवाच ॥ ॥ एवमेतद्बलीशुंभोनिशुंभश्चातिवीर्यवान् ॥ किंकरोमिप्रतिज्ञामेयदनालोचितापुरा ॥ ७८ ॥

षांकेशाकर्षणनिर्द्धूतानांऋषीणांआसमंतादभिव्याप्यवर्त्तमानांगौरवंमान्यत्वंतददंतिनाशयंतियेदैत्याःतेकेशाकर्षणगौरवादः ॥ पैओवैशोषणेतान्केशाकर्ष
णनिर्द्धूतगौरवादोदैत्यान्वायतिशोषयतिकेशाकर्षणनिर्द्धूतगारवाद्वा ॥ आतोनुपसर्गेकः ॥ एवंविधासतीआगमिष्यसि अनुस्यूतब्रह्मविष्णुमहेशानांगौ
रवादोदैत्याः ॥ अदभक्षणेक्विप् ॥ तान्वायंतीशोषयंतीसत्यपास्यासिस्वस्थानंइतिसखीजनाभीष्टाभिप्रायः ॥ ७७ ॥ हेदूतत्वयायदुक्तंशुंभोबलीवीर्यवान्
निशुंभश्चवीर्यवान्इतिएतदेवंनान्यथा ॥ अहंतुकिंकरोमियद्यस्मान्मेममप्रतिज्ञाइयमस्तिपुराप्रागेवमयानालोचिताविचारितानाभूत् ॥संभावितंप्रतिज्ञाय
निर्वोढव्यंमनीषिभिः ॥ प्रतिज्ञयाप्यसंभाव्यंनिर्वोढव्यंकथंनतैः॥निर्वोढव्यंप्रतिज्ञातंतर्कितंवाप्यतर्कितं॥प्रतिज्ञातपरित्यक्तेःप्राणत्यक्तिर्वरंनृणां ॥वीरकर्मतदे

तच्चवीर्यमित्यभिधीयते॥इवेत्थमर्थयोरेवं॥यत्तद्यतस्ततोहितौ॥मयापुराऽनलोचिताप्यविचारितापिमेप्रतिज्ञाइदृश्येवाभूत्॥अतश्चाहंकिंकरोमियुद्धादन्यत्रकिं
तुयुद्धमेवकरोमि॥किंच बलीशुंभोनिशुंभश्चातिवीर्यवानिति दूतेनयोगर्वउक्तःतमनर्थमपिगर्वमर्थंकरोमि॥एवमेतद्इदमित्थमेवेतिदेव्याःपरमोभिप्रायः ७८

तयुद्धमेवकरोमि॥किंच बलीशुंभोनिशुंभश्चातिवीर्यवानिति दूतेनयोगर्वउक्तःतमनर्थमपिगर्वमर्थंकरोमि॥एवमेतद्इदमित्थमेवेतिदेव्याःपरमोभिप्रायः ७८

हेदूतसत्वंगच्छनिजस्थानंयाहि ॥ मयादेव्यायदेतदुक्तंप्रतिज्ञाप्रमुखंवचनंतदेवसर्वमादृतःआकलितवान्सन्नसुरेंद्रायाचक्ष्वआख्याहि ॥ सचसएवशुम्भः
यद्युक्तंउचितंयच्चानुचितंतत्करोतु ॥ यदेतत्सर्वमादितःपाठे आदितआरभ्यअसुरेंद्रायाचक्ष्व ॥ चक्षिङ्लोलोटिरूपं ॥ सचयद्युक्तंउचितंतत्करोतु ॥ ७९ ॥
॥ इतिमार्कंडेयेश्रीमद्रा॰जतोमरान्वयश्रीमद्‌॰शंतनुचक्रवर्त्तिविरचितायांशांतनव्यांदेवीमाहात्म्यटीकायांदेवीदूतसंवादःद्व्यशीतितमोध्यायः ॥ ८२ ॥
॥ इतिमार्कंडेयेश्रीमद्रा॰जतोमरान्वयश्रीमद्‌॰शंतनुचक्रवर्त्तिविरचितायांशांतनव्यांदेवीमाहात्म्यटीकायांदेवीदूतसंवादःद्व्यशीतितमोध्यायः ॥ ८२ ॥

हेसुरथइतिप्रागुक्तंदेव्याःवचःआकर्ण्यश्रुत्वाअमर्षेणक्रोधेनपूरितःपूर्णःसदूतःसमागम्यदेवीशैलात्सकाशादागत्यदैत्यराजायशुम्भायविस्ताराच्छब्दप्रपंच
नात्समाचष्टअकथयत् ॥ चक्षिङ्लङ्रूपं ॥ १ ॥ असुराणांराट्दैत्यराजःशुम्भःतस्यदूतस्यमुखाद्यद्वाक्यं यद्वा तस्यादेव्यावाक्यंप्रतिकूलमाकर्ण्य
श्रुत्वाततोसौसक्रोधःसन्दैत्यानामधिपंधूम्रलोचनंनाममहासुरंप्राह प्रस्थापयामास ॥ प्रइत्युपसर्गप्रतिरूपकमाहेतितिङंतप्रतिरूपकमव्ययं ॥ हेशुम्भ

सत्वंगच्छमयोक्तंतेयदेतत्सर्वमादृतः ॥ तदाचक्ष्वासुरेंद्रायसचयुक्तंकरोतुतत् ॥ ७९ ॥ ॥ इतिमार्कंडेयपुराणेदे
वीमाहात्म्येद्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥छ॥ ॥ ऋषिरुवाच ॥ ॥ इत्याकर्ण्यवचोदेव्याःसदूतोमर्षपू
रितः ॥ समाचष्टेसमागम्यदैत्यराजायविस्तरात् ॥ १ ॥ तस्यदूतस्यतद्वाक्यमाकर्ण्यासुरराट्ततः ॥ सक्रोधःप्राह
दैत्यानामधिपंधूम्रलोचनं ॥२॥ हेधूम्रलोचनाशुत्वंस्वसैन्यपरिवारितः ॥ तामानयबलाद्दुष्टांकेशाकर्षणविह्वलां ॥३॥

त्वत्पार्श्वंदेवीनायातित्वयासहयोद्धुमिच्छतितांजेतुंउद्युंक्ष्व ॥ इतिदूतवचःश्रुत्वादेव्यानयनायशुंभोधूम्रलोचनंप्रस्थापयामास ॥ २ ॥ हेधूम्रलोचनत्वंस्व
सैन्यपरिवारितःसन्दुष्टांकेशानामाकर्षणेनविह्वलांविवशांतांनितंबिनीमाशुक्षिप्रंबलादानयप्रापयमांइतिशेषः ॥ नीप्रापणेद्विकर्मकः ॥ इत्थंशुंभस्याचर
णंसन्मंत्रशक्तिरहितश्चतमिदमनीतिकमालोच्यहितकारीनीतिविशारदोमात्यः कश्चिद्धूम्रलोचनंप्रस्थातुमुक्तमुदिश्योपदिशति ॥ कथं ॥ तामानयबला
दुष्टांइत्यत्रतंत्रेणश्वेतोधावतीतिवदर्थांतरसृष्टैपदांतरसृष्टिरिष्टैवेतितांअआनयइतिच्छेदःक्रियते ॥ तथाहि ॥ अनेकार्थसकृदुच्चरणंतंत्रमाहुः ॥ तत्रअइति
निषेधेव्ययं॥अमानोनाःप्रतिषेधेव्ययाख्याइतिवचनात्॥अतश्चधूम्रलोचनत्वंस्वसैन्यपरिवारितः सन्तांदेवींआशुक्षिप्रंबलाद्बलमाश्रित्यअआनय(आत्मा)
नय ॥कीदृशींतांपूर्ववत्तंत्रेणआनयबलाद्दुष्टांइत्येकंपदं अविद्यमानःनयोनीतिर्येषांतेअनयाःशुंभादयाःतेषांइमानिबलानिआनयानि(तानि)चतानिबलानिच

आनयबलानि(तानि)अतंतिसततंगच्छंतिभजंतिआनयबलातः॥अतसातत्यगमनेक्विप्॥ तेषुआनयबलात्सुआनयसंबंधिबलभाक्षुपुरुषेषुदुष्टाविरुद्धाक्रूरा
तामानयबलाद्दुष्टां इत्येकंपदं॥यद्वा॥केशानांब्रह्मादीनामात्मशक्तेरात्ममहामायाकेशात्सकाशाज्जगदुत्पत्तिस्थितिलयकारिणी ॥तत्तदवसरेषूचितेष्वाकर्षणं
केशाकर्षणंस्वमायानिलीनब्रह्मादिप्रकटीकरणंआह्वानंतद्विषयेविशेषेणह्वलतिचलतिविजृंभतेकेशाकर्षणविह्वलातां ॥ह्वलचलनेपचाद्यच्॥इतिदेवीष्टार्थप्र
तिपत्तिव्याख्यानतोदैत्यविध्वंसोनभवतीतिनीतिविदमात्याभिप्रायः ॥३॥ हेधूम्रलोचनतस्यादेव्याःपरित्राणंरक्षणंददातीतितत्परित्राणदः ॥ आतोनुपसर्गे
कः ॥ यःकश्चिन्मरोमर्त्योवाअमरोदेवोवायक्षोवापिगंधर्वोवापिपरःशत्रुःपरःतांजिघृक्षुरन्यः ॥ चकारान्नागादिर्वाविपक्षत्वेनउत्तिष्ठतेउद्युंक्तेयदिसहंत
व्यएवनस्थापनीयः ॥ उदोनूर्ध्वकर्मणिइत्यात्मनेपदं ॥ यक्षःकुबेरादिः ॥ गंधर्वस्तुंबुरादिप्रभृतिः ॥ पक्षांतरेयद्ययंशुंभोनीतिरहितोयदाइत्थमादिक्षत्पर

तत्परित्राणदःकश्चिद्यदिवोत्तिष्ठतेपरः॥ सहंतव्योमरोवापियक्षोगंधर्वएववा ॥ ४ ॥ ॥ ऋषिरुवाच ॥ ॥ ते
नाज्ञप्तस्ततःशीघ्रंसदैत्योधूम्रलोचनः॥ वृतःषष्ट्यासहस्राणामसुराणांद्रुतंययौ ॥ ५॥ सदृष्ट्वातांततोदेवींतुहिना
चलसंस्थितां॥ जगादोच्चैःप्रयाहीतिमूलंशुंभनिशुंभयोः॥ ६ ॥ ॥छ॥ ॥छ॥

म्रियमानयेतितत्रनीतिपरोमात्यःप्राह ॥ हेधूम्रलोचनतस्याःदेव्याःसकाशात्परित्राणंयेषांतेतदेकशरणादेवादयः ॥ दोऽवखंडने ॥ तान्द्यातिखंडयतिइ
तितत्परित्राणदः ॥ तद्भक्तहिंसापरःशत्रुर्यःकश्चिन्मरोमर्त्योवाअमरोदेवोवायक्षःकुबेरादिःगंधर्वस्तुंबुरुप्रभृतिर्वा चकाराद्दैत्योवान्यस्तद्वेषीवाराक्षसोवाल
कानिवासीनागोवासवोहंतव्यएवेतितस्मात्तांनानय ॥ आनयसिचेत्तामापदमेवानयसिदैत्यकुलविध्वंसिनीसेतिनीतिविदमात्योक्त्यादेवीष्टार्थसिद्धिः॥
॥ ४ ॥ ततस्तेनशुंभेनशीघ्रंगच्छतामानयेत्याज्ञप्तआदिष्टःसधूम्रलोचनःदैत्यःषष्ट्यागुणितानांसहस्राणांसंख्येयानामसुराणांसंघट्टेनवृतःद्रुतंक्षिप्रंययौ ॥
सहस्राणांषष्ट्यावृतःअसुराणांसम्बंधीनिसहस्राणितेषांसम्बधिनीयाषष्टिःतयावृतोद्रुतंययौ ॥ आज्ञप्तइतिज्ञप्मारणतोषणनिशामनेषुमिच्चेतिचुरादिः॥
कर्मणिक्तः ॥ वादांतसूत्रेज्ञप्तइतिनिपातनात्वाइट्प्रतिषेधोणिलुप्तोपधायाह्रस्वताच ॥ ज्ञानियोजनेचुरादिरेव ॥ अतोनिष्ठायामाज्ञप्तइत्येव ॥
॥ ५ ॥ ततःशुम्भनिदेशतःसधूम्रलोचनः तुहिनाचलसंस्थितांहिमाचलस्थांतांदेवींदृष्ट्वाउच्चैर्जगादअत्युच्चैरुवाच ॥ हेदेवित्वंशुम्भनिशुम्भयोर्मूलं

समीपंप्रयाहिगच्छति ॥ मूलमाश्रित्य ... ॥ इतिशुम्भानुकूलोर्थः ॥ ... ॥ ... ॥ कीदृशीदेवीशुम्भनिशुम्भयोः ॥ शुम्भभा
नंमूलः ॥ भावेघञ् ॥ तंमूलंप्रभुतांयाहिप्राप्नुहीतिसदेवीसखीजनःतुहिनाचलसंस्थितांतांदृष्ट्वाउच्चैर्जगाद ॥ कीदृशींदेवींशुम्भनिशुम्भयोः ॥ शुम्भ
सनहिंसनयोः भ्वादिःपरस्मैपदीशुम्भतिरणेभासति हिनस्तिचेतिशुम्भोदैत्यः ॥ पचाद्यच् ॥ नितरांशुम्भनंहिंसनंनिशुम्भः ॥ भावेघञ् ॥ शुम्भस्यदे
त्यस्यनिशुम्भःहिंसनंतस्मिन् विश्वयेयतमाना ॥ सप्तम्यांजनेर्डः अन्येष्वपिदृश्यतेइत्यत्रापिशब्दात्सर्वोपाधिव्यभिचारः इतिवचनाद्धात्वंतरेपिकारकां
तरेपिचडोभवतिडित्यभस्यापिटिलोपः स्त्रियांटाप् ॥ अवतिरक्षतिपापेभ्यः ऊःउवौउवः ॥ शुम्भनिशुंभयाचासौऊश्चेतिविगृह्यकर्मधारये आद्गु
णेचशुम्भनिशुम्भयोः ॥यद्वा॥ शुम्भनिशुम्भुया देवी । कीदृशी ॥ ऊःइतिपदच्छेदः॥अवरक्षणेक्विप् ॥ ज्वरत्वरास्त्रिव्यविमवामुपधायाश्चेतिवकारस्यअकार
स्यऊठादेशद्वयेसवर्णदीर्घत्वेऊःरक्षिकेति ॥ संस्थितांसम्यगवस्थितां ॥ संस्थाधारेस्थितौमृतौ ॥ ६ ॥ हेदेविअद्यास्मिन्नहनिभवतीप्रीत्यास्वरुच्यामद्भर्त्ता

नचेत्प्रीत्याद्यभवतीमद्भर्त्तारमुपैष्यसि॥ ततोबलान्नयाम्येषकेशाकर्षणविह्वलां ॥ ७॥

रंस्वामिनंशुम्भंनोपैष्यसिचेद्यदिनागमिष्यतिततःतर्हिएषोहंधूम्रलोचनःअधुनैवबलात्कारेणकेशानामाकर्षणादाश्रथनाद्विह्वलांविवशांभवतींममभर्तारंस्वा
मिनंशुम्भंनयामिप्रापयामि ॥ वर्त्तमानसामीप्येभविष्यतिलट् ॥ उपैष्यतीतिभवच्छब्दप्रयोगेप्रथमपुरुषएव ॥ एत्येधत्यूठ्सुवृद्धिः ॥ इतिशुम्भानुकूलोर्थः
देव्यास्त्वनुकूलस्त्वेषः॥ अद्यभवतीमन्मांसखीजनंआप्तवर्गंप्राप्य॥कर्मणिल्यब्लोपेपंचमी ॥ अबलादबलात्कारेणततएवप्रीत्याहर्षेणभर्त्तारंशिवंननउपैष्य
तिचेत्उपगमिष्यतिचेत् ॥ द्वौप्रतिषेधौप्रकृतमर्थंगमयतः ॥ ततएषोहंसखीजनः ॥ सांकेशाकर्षणविह्वलांयामिप्राप्नोमिजानामि ॥ कःब्रह्माअःविष्णुः
तौकौब्रह्मविष्णूतयोरीशःस्वामीशिवः केशःतस्याकर्षणमाह्वानंतस्मिन्विषयेविह्वलांलज्जितत्वात् ॥ यद्वा ॥ उपाएष्यतीतिच्छेदः ॥ नचेत्प्रीत्येत्येकपदं॥
उःसंबुद्धौरुपोकौचशिववाचित्वनव्ययं ॥ धूम्रलोचनआह ॥ उहेदेविअद्यभवतीमद्भर्त्तारंशुम्भंएष्यतिप्राप्स्यतिकिंभूतासती ॥ पारक्षणे ॥ पांतिरक्षंति
निवारयंतिपाः ॥ कर्तरिक्विपिजसिरूपं ॥ अजगतिक्षेपणयोः ॥ पोरक्षकान्शुम्भपरिवारानजतिक्षिपतिदूरीकरोतिपादेवी ॥ सप्तम्यांजनेर्डः ॥ अन्येष्व
पिदृश्यतेइत्यत्रापिशब्दःसर्वोपाधिव्यभिचारार्थइतिवचनादधात्वंतरादपिकारकांतरेपिचडोभवति ॥ डित्यभस्यापीतिअजशब्दस्यटेर्लोपः ॥ स्त्रियामजा

यतष्टाप् ॥ हल्ङ्याब्भ्यादिलोपेसतिपाइतिरूपंपाशुंभरक्षकक्षेपिका ॥ देवीशुंभंहंतुंएष्यतीत्यर्थः ॥ पुनःकिंभूता नचेत्प्रीत्याआकारांतएतत् ॥ चितिसंज्ञाने चेतंतिकेचनतानन्येप्रयुंजते ॥ इतिहेतुमतिचेतिणिच्ततःक्विप् ॥ णेरनिटि॥ वेरपृक्तस्यलोपः प्रत्ययलक्षणेनगुणः॥चेतोदेवर्ष्यादयः तेषु चेत्सु बोधयितृषु प्रीतिःस्नेहश्चेत्प्रीतिः ॥ नइतिनञोन्यएवनिषेधार्थोनिपातः ॥ नविद्यमानाचेत्प्रीतिर्येषांदैत्यानांतेनचेत्प्रीतयः ॥ नलोपोनञइतिचास्ति नतुनशब्दस्याप्यननुबंधकस्य॥ उज्झउत्सर्गे ॥ नचेत्प्रीतीन्अविद्यमानविबुधप्रीतीन्दैत्यान्उज्झतिउत्सृजतिहिनस्तीतिपूर्ववड्प्रत्ययेडित्यभस्यापिटेर्लोपः सचउज्झेरेवस्त्रियांडांतादाप् ॥ इकोयणचि॥हल्ङ्याब्भ्यादिलोपः॥नचेत्प्रीत्यादेवीदैत्यानुपैष्यतिततोऽहंधूम्रलोचनः योद्धुमनाःसन्भवतीबलाद्बलंसैन्यंप्राप्यकर्मणिल्यब्लोपेपंचमी ॥ नयामि नगच्छामि मद्भर्तारंचनगच्छामीत्यर्थः ॥ किंभूतांभवतीं एषकेशाकर्षणविह्वलांइत्येकंपदं ॥ इषगतिहिंसादर्शनेषुभ्वादिरात्मनेपदीआङ्पूर्वःआसमंतादीषंतिहिंसंतिएषः पचाद्यच् ॥ एषाणांहिंसकानांदैत्यानांकेशाःमूर्द्धजाःतेषांआकर्षणंतस्मिन्विषयेविशेषेणह्वला ॥ ह्वलचलनेपचाद्यच्॥

॥ देव्युवाच ॥ ॥ दैत्येश्वरेणप्रहितोबलवान्बलसंवृतः ॥ बलान्नयसिमामेवंततःकिंतेकरोम्यहं ॥ ८ ॥ ऋषिरुवाच ॥ ॥ इत्युक्तःसोभ्यधावत्तामसुरोधूम्रलोचनः ॥ हुंकारेणैवतंभस्मसाचकारांबिकाततः ॥ ९ ॥

एषकेशाकर्षणविह्वलांदैत्यकेशग्रहणसज्जांइत्ययंदेवीशब्दार्थः ॥ ७ ॥ हेधूम्रलोचनत्वंबलवान्सामर्थ्ययुक्तः बलेनसैन्येनसंवृतःवेष्टितः ॥ अथचदैत्येश्वरशुम्भेनप्रहितः प्रस्थापितःबलात्केशाकर्षणादेः मामबलांनयसिततोहंतेतवकिंकरोमिस्त्रीत्वाद्युद्धादिकंकर्त्तुमक्षमास्मीतिशुम्भानुकूलोर्थः ॥ देव्यनुमतस्त्वेषः ॥ हेधूम्रलोचनत्वंशुम्भेनप्रस्थापितोसिएवंचसतित्वामहंपृच्छामिबलमत्तीतिबलात्अहं मांदेवींतधूम्रलोचनस्यसंबंधिवस्तुकिंनयसिकिंप्रापयसि ॥ नयेर्द्विकर्मत्वादजांग्रामंनयतिइतिवत्प्रधानमप्रधानंचेतिकर्मद्वयंवक्तव्यंतत्रबलादंमांदेवींप्रधानंकर्म द्वितीयंकिं स्यात्तद्वद ॥ अथेहप्रकृतत्वाद्बलादंमांदेवींशुम्भंचेन्नयसितर्हिबलादमितिकृत्वातस्यबलंसामर्थ्यंअत्स्यामि ॥ अथबलादंमांशुम्भसैन्यंप्रातिनयसिबलादहंतदेवात्स्यामिसंहरिष्यामि ॥ ततस्तेकिंकरोमिकिमस्तितेयत्करोम्यहंयत्किंचिदस्तितदपिविनष्टंकरोमीतिक्रोधावेशोत्थोदेव्यभिप्रायः ॥ ८ ॥ इत्येवंदेव्योक्तःसधूम्रलोचनःअसुरःतांदेवींअभ्यधावत्वेगेनाभ्यद्रवत् ॥ सृगतौसर्तेर्वेगितायांगतौधावादेशोवक्तव्यः ॥ यद्वा ॥ धावुगतिशुद्ध्योःउभयपदी ॥ ततोनंतरंसांबिकादेवीतंधूम्रलोचनं

क्रोधानलज्वालागर्भेणहुंकारेणैवभस्मचकारभस्मीचकार ॥ हुंपितर्कैपरिश्रश्रेऽभिरसायांभस्तेनभये ॥ भस्मसायक्रांशसिवापाठः ॥ [illegible]
तिअभूततद्भावेकृभ्वस्तियोगेसंपद्यकर्त्तरिच्विरित्यस्मिन्विपयेकृरस्नतायांगम्यमानायांसातिप्रत्ययः॥अभस्मभस्मचकारकात्स्न्येंनभस्मसात्चकारधूम्रलोचन
शरीरंकृत्स्नमपि(भस्म)चकारेत्यर्थः ॥ अंतर्वर्तिविभक्त्याश्रितेनपदत्वेननलोपत्वेनपादांतयतिश्छांदसत्वेन॥९॥अथधूम्रलोचनेभस्मीकृतेतथाक्रुद्धंअसुरा
णांमहासैन्यंकर्त्तृतीक्ष्णैःसायकैःशरैस्तथाशक्तिसहितैःपरश्वधैःपरशुभिश्चायुधैःकुठारैरंबिकांववर्षशरसंपातेनशक्तिपरशुपातेनचदेवींसंछादयामास ॥शक्ति
परश्वधैरितिमध्यमपदलोपीसमासः ॥ द्वंद्वेतुसेनांगत्वादेकवद्भावःस्यात् ॥ इहासुरमहासैन्यंकर्तृअंबिकामायुधैर्ववर्षतदासिंहएवयुयुधेनैवांबिकेतिकस्य
चिदाकांक्षास्यात्किमंबिकाअसुरशरसंपाततःनजीवतियद्यप्युत्तरत्रसासमानीयतांलब्धिविततिदमृततोपपत्स्यतेतथापिसामहासुरशरसंपाततःमूर्छितासती

अथक्रुद्धंमहासैन्यमसुराणांतथांबिका ॥ ववर्षसायकैस्तीक्ष्णैस्तथाशक्तिपरश्वधैः ॥ १० ॥ ततोधुतसटःकोपात्कृत्वानादंसुभैरवं ॥ पपातासुरसेनायांसिंहोदेव्यास्तुवाहनः ॥ ११ ॥ कांश्चित्करप्रहारेणदैत्यानास्येनचापरान् ॥ आक्रम्यचरणेनान्यान्निजघानमहासुरान् ॥ १२ ॥

॥छ॥ ॥छ॥

पुनरुत्थाययोद्धुमक्षमाभूत्॥अन्यथायुध्यतैवकिंनेतिवीरकर्मण्यपकर्षः स्यात् अतःसोपियुयुधेतद्यथातत्रैवश्लोके अंबिका आम् भवतिपदच्छेदः ॥ अंबिका
कर्त्रीमहासैन्यंकर्म ॥ उप्रश्नेंगीकृतौरोषआम्स्मृतौचावधारणे ॥ अथधूम्रलोचनःसंग्रामेदेव्याभस्मीकृतइतिआमिइतिमनसास्मृत्वाक्रुद्धंअसुराणांमहासै
न्यंकर्मअंबिकापितथातद्देवक्रुद्धासतीसायकादिभिर्ववर्षअसुरसेनांछादयामास ॥ यद्वा ॥ आमित्यवधारणे ॥ अथतथाक्रुद्धमसुराणांमहासैन्यंकर्मअंबि
काआम्अंबिकैवववर्षनत्वसुरसैन्यंअंबिकाइतिअंबिकायाएववीरकर्मण्युत्कर्षः ॥ १०॥ ततःकोपाद्धुतसटःकंपितस्कंधकेसरःससिंहोदेव्यावाहनंवाहनी
भूतोदेव्याः सिंहःसुभैरवमतिभयंकरंनादंगर्जनंकृत्वाऽसुरसेनायांहंतुंपपातउत्प्लुत्यनिपपात ॥ स्ववाहनमितिपाठे अनन्यसाधारणंवाहनंदेव्याएवसिंहो
वाहनंनान्यस्येति ॥ सइतिपाठेसप्रसिद्धःसिंहः ॥ भीरोरयंत्रासकारीभैरवःत्रिलिंगः ॥ वाहनमाहितादितिनिर्देशाद्वाहनशब्दोनपुंसकलिंगः ॥ असुरसेना
यांनिपत्यसिंहःकिमकार्षीत्इतितत्राह ॥ ११ ॥ ससिंहःपंचास्यःकरप्रहारेणकांश्चिद्दैत्यान्जघान ॥ आस्येनअपरांश्चदैत्यान्मुखेनजघान ॥ चरणेनाक्र

स्यअन्यान्जघानजिहिंस ॥ ससिंहःखलुपंचास्यः एकंआस्यंवक्रं आस्यवद्धातकत्वात्करद्वयंचरणद्वयंचास्यचतुष्टयंपंचास्यानियुद्धसाधनानियस्यसपंचास्यः॥ आक्रम्यचाधरेणान्यानित्यपिपाठेअधरेणचरणभागेनाक्रम्यान्यान्महासुरान्जघानेत्येवार्थः ॥ अन्यथाऽधरेणौष्ठेनमहासुराणामाक्रमणंनसंभवतिअथदेवीप्रभावात्सम्भवेत् ॥ तस्याप्यास्येनचापरान्जघानेत्यास्यग्रहणेनैवाधरस्यापियुद्धसाधनत्वेनग्रहणस्यसिद्धत्वात्पुनरधरेणेतिकेयंवाचोयुक्तिरुक्तिमतां ॥ यद्वा ॥ अधरेणओष्ठेनस्फुरितेनप्रकटितःकोपोधरइत्युपचर्यते ॥ अधरेणकोपेनाक्रम्य ॥ यद्वा ॥ अविद्यमानाधराभूर्यत्रसोधरः आकाशदेशः ॥ अंतरिक्षेणाक्रम्यनिरुध्य ॥ १२ ॥ सकेसरीसिंहःकेषांचिद्दैत्यानांकोष्ठान्जठराभ्यंतरान्देशान्नखैर्नखैरुत्पाटयामासविदारयामास ॥ पटभाषार्थश्चुरादिः॥ धात्वनेकार्थत्वेनप्रयोगतोविदारणार्थः ॥ असाकल्येतुचिच्चन ॥ पुंसिकोष्ठोंतर्जठरंकुसूलोंतर्गृहंतथा ॥ कोष्ठानिकेसरीतुपाठेव्यत्ययेनच्छांदसंनपुंसकत्वं

**केषांचित्पाटयामासनखैःकोष्ठानिकेसरी॥तथातलप्रहारेणशिरांसिकृतवान्पृथक् ॥१३॥विच्छिन्नबाहुशिरसःकृतास्तेनतथापरे॥ पपौचरुधिरंकोष्ठादन्येषांधुतकेसरः ॥ १४ ॥ क्षणेनतद्बलंसर्वंक्षयंनीतंमहात्मना ॥ तेनकेसरिणादेव्यावाहनेनातिकोपिना ॥ १५ ॥**

॥ यद्वा ॥ कोष्ठान् इकेसरीइतिच्छेदः ॥ इःकामःइनाकामेनचरतिइचारीअनिवारितप्रसरःकेसरीत्यर्थः ॥ मध्यमपदलोपीसमासः॥तथादलप्रहारेणहस्ततलघातेनचपेटेनचपेटयाचपेटघातेनकेषांचिद्दैत्यानांशरीरेभ्यःशिरांसिपृथग्भूतानिचकार ॥ करनखपंजरेणशिरांसिच्छित्वाभुविपातयामासेत्यर्थः ॥ पाणौचपेटप्रतलप्रहस्ताविस्तृतांगुलौ ॥ केचिदाहुः ॥ तलाभ्यांप्रतलाभ्यांप्रवर्तितत्वेनप्रहारेणशिरांसिपृथक्कृतवानितियुक्तमेतत् ॥ यदभ्यधुः ॥ द्वौसंहतौसिंहतलौप्रतलौवामदक्षिणौ॥ द्वौप्रतलौप्रसृततलौसंहतौवामदक्षिणौमिलितौसिंहतलौसिंहतलाख्यौकथ्येते ॥ सिंहोमिलिताभ्यांचपेटाभ्यांहंति ॥ १३ ॥ तथाशौर्यभाजातेनसिंहेनअपरेशत्रवःविच्छिन्नबाहुशिरसःकृताः ॥ बाहवश्चशिरांसिचबाहुशिरःप्राण्यंगत्वादेकवद्भावः ॥ विच्छिन्नंबाहुशिरोयेषांते ॥ तथाधुतकेसरःसःकेसरीअन्येषांमहासुराणांकोष्ठादन्तर्जठराज्जठरांतर्देशात्कोष्ठंविदार्य कर्मणिल्यब्लोपेपञ्चमी ॥ रुधिरंपपौ ॥ पापाने ॥ एतेनसिंहस्यापिवीरपानौचितिकथिता ॥ वीरपानंतुयत्पानंवृत्तेभाविनिवारणे ॥ ॥ १४ ॥ तेनकेसरिणादेव्यावाहनेनअतिकोपिना अतएव क्षणेनैवैतस्यासिद्धंबलंसैन्यं ॥ यद्वा ॥ तस्याधूम्रलोचनस्यबलंसैन्यंक्षयंनाशंनीतंप्रापितं ॥ निर्व्या



(२) यद्वा अधस्तादपधारतः शरीरस्याधस्तादधोभागेन उरोदेशेनाक्रम्य इत्यधिकमेकस्मिन्पुस्तके ।

(२) यद्वा अधस्तादपनारतः शरीरस्याधस्तादधोभागेन उरोदशनाक्रम्य इत्यधिकमकोस्मिन्पुस्तके ।

पारस्थितौकालविशेषोत्सवयोःक्षणः ॥ निलयापचयौक्षयौ ॥ आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मंच ॥१५॥ इहश्रवणाकोपनाज्ञापनाक्रियात्रयापेक्षे ककर्तृकत्वेनश्लोकयुग्मस्यैकोन्वयः ॥ देव्यातत्प्रसिद्धंधूम्रलोचनमसुरंनिहतंभास्मितंश्रुत्वाततःदेवीकेसरिणादेव्याःसिंहेनतस्यधूम्रलोचनस्यकृत्स्नंबलंसै न्यंक्षपितंनाशितंच ॥ श्रुत्वादैत्याधिपतिःशुम्भःकोपतःप्रस्फुरिताधरःसंरंभकंपितोष्ठःसन्चुकोपचुक्रोध ॥ अथतौप्रसिद्धौप्राग्दृष्टदेवीकौचण्डमुण्डौम हासुरौकर्मभूतौ आज्ञापयामासनिजभृत्यौनियुयुजे ॥ क्षपितंइतिक्षपप्रेरणेचुरादिः ॥ अदन्तः ॥ क्षयितमितिपाठे॥ क्षयःसंजातोस्येतितारकादित्वादित च् ॥ आज्ञापयामास ॥ ज्ञानियोजनेचुरादिः ॥१६ ॥१७॥ हेचण्डहेमुण्डयुवांबहुभिःबलैःपरिवारितौगच्छतं कुत्र यत्रसादेवीपर्वतेगत्वाचगत्वैवक्षिप्रंलघु सादेवीसमानीयतांयुवाभ्यांइतिशेषः ॥ गच्छतंइतिगमेर्लोण्मध्यमपुरुषस्यद्विवचनस्यथसस्तम्लोटोलङ्वदतिदेशात् ॥ सेत्यभिहितंकर्म ॥ मामितिद्विती

श्रुत्वातमसुरंदेव्यानिहतंधूम्रलोचनं ॥ बलंचक्षयितंकृत्स्नंदेवीकेसरिणाततः॥१६॥ चुकोपदैत्याधिपतिःशुंभःप्रस्फु रिताधरः ॥आज्ञापयामासचतौचण्डमुण्डौमहासुरौ ॥१७॥ हेचण्डहेमुण्डबलैर्बहुभिःपरिवारितौ॥गच्छतंतत्रगत्वा चसासमानीयतांलघु ॥१८॥केशेष्वाकृष्यबद्ध्वावायदिवःसंशयोयुधि ॥ तदाशेषायुधैःसर्वैरसुरैर्विनिहन्यतां॥१९॥

यंकर्मज्ञेयमजाग्रामंनीयतामितिवत् ॥ प्रधानंकर्माभिहितंनाप्रधानं ॥ इतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेषः ॥ तथाहि ॥ गच्छतं तत्र गत्वा तु ॥ सा आसं आनीयतां लघु इतिपदच्छेदः ॥ असुक्षेपणेभावेघञ् ॥ असनमासः क्षेपोधःकारोन्यक्कारः ॥ आस्तुस्यात्कोपपीडयोः ॥ ततश्चचण्डमुण्डयोरा गमनंदृष्ट्वासखीवर्गोदेवीमाचष्ट ॥ हेदेवित्वंआःकोपेनतत्रगच्छकुत्रयत्रचण्डमुण्डौस्तः ॥ गत्वातुपुनःतंचण्डंमुण्डंचआह्वयस्व ॥ हेचण्डहेमुण्डयोद्धुमाग च्छेति ॥ किंच ॥ तुपुनःतयादेव्यालघुशीघ्रंसाचण्डमुण्डसंम्बधिनीसेनाआसंक्षेपंविनाशंचनीयतांयोज्यतांइति ॥ १८ ॥ हेचण्डहेमुण्डसैन्यानियुष्माभिः सादेवीकेशेषुआकृष्यबद्ध्वारज्जुभिःसासमानीयतां ॥ केशाकर्षणेबन्धनेचवोयुष्माकंयदिपक्षांतरेसंशयःस्यात्तदायुधिसंग्रामेऽशेषायुधैःसाधनैःतद्युक्तैर्वास वैरसुरैर्युष्माभिःसादेवीनिहन्यतांनिघ्नितानिजाधीनाकर्त्तव्या ॥ यद्वा ॥ विशेषेणनिहंतव्या ॥ निघ्नावश्याकर्त्तव्येतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेवं ॥ देवीस्ववर्गानादिक्षत् ॥ हेमदीयाःगणाःयुष्माभिःचण्डोमुण्डश्चकेशेष्वाकृष्यबद्ध्वाविनिहन्यतांयदिवोयुष्माकंकेशाकर्षणेबन्धनेचवासंशयःस्यात् तदायु

धिसंयुगेअशेषायुधैःसर्वैर्युष्माभिःतैर्दैत्यगणापहारिभिः ॥ इतिदेव्यभीष्टार्थः ॥ अन्यथादेव्याःपराभिभववचःश्रवणादपकर्षःशक्यते ॥अथवाकेशेष्वा आ
रुष्य अवा अयंदिवः संशय इतिपदच्छेदः ॥ कःब्रह्माअःविष्णुःईशोरुद्रःतेषांइवइषवोबाणायस्याःसाकेशेषुः तयादेव्याकेशेष्वा ॥ आकृष्यबद्ध्वादै
त्यानव रक्ष कान् अयदिवः अयेनलब्धाद्यौर्यैस्तेअयदिवोदेवाः तानयदिवःसंभृताः आभरणीकृताःशयवःचक्रमंडल्याख्याःसर्पाययासासंशयुः कालिकादे
वीतत्संबुद्धौहेसंशयोतस्यायुधोयुद्धस्यसंबधिन्यआशाःतासुप्रयुक्तानिईषालांगलदंडाएवायुधानियैः तैस्तदाशेषायुधाःदैत्याःतैरस्यविग्रहांतरत्वग्रेवक्ष्येइतिक्र
त्पदविवक्षितविग्रहा॥अत्रान्वयः॥ सखीभिर्देविप्रार्थ्यतेहेसंशयोसंभृतशयोहेसंभृतचक्रमंडल्याख्यसर्प्पाभरणेकालिकेदेवित्वंअयदिवः ॥ अयेनलब्धस्वर्गा
नूदेवान् अवरक्ष अवरक्षणे॥ हेदेवीकेशेष्वा तृतीयांतंएतत्। ब्रह्मविष्णुरुद्रसदृशबाणयात्वयापाशेनदैत्यानाकृष्यआछित्वालब्ध्वावातदाशेषायुधैर्युद्धदिक्प्र
युक्तैरायुधैःसर्वैरसुरैःसहसचण्डःमुण्डश्चदैत्योविनिहन्यतांहिंस्यतां॥१९॥हेचण्डहेमुण्डयुष्माभिःदुष्टाभिःदैत्यद्वेषिण्यांतस्यांदेव्यांहतायांताडितायांपरासूकृत

## तस्यांहतायांदुष्टायांसिंहेचविनिपातिते ॥

यांवातदीयेसिंहेभुविनिपातितेव्यसूकृतेवाशीघ्रमागम्यतांनिजस्थानंप्राप्यतां ॥अथसाजीवंतीआनेतुंशक्याचेत्तर्हितामंबिकांगृहीत्वाबद्धाशीघ्रमागम्यतां
तद्दर्शनेममाभिलाषोस्तीतिभावः ॥ तस्यांहतायांइत्यतिकोपप्रज्वलितात्मनापुंसाप्रबलशत्रौमृधेमर्त्तोपद्रष्टुमिष्यते ॥ अथवाक्रोधव्याकुलचेतसातस्यांहता
यांसमागम्यतामितिवदुक्तं ॥ ततःपुनरपिउक्तं ॥ बद्धातुपटुतांजीवंतीमेवशीघ्रंगृहीत्वायुष्माभिरागम्यतांइत्युक्तं ॥ नत्वंबिकाशब्दोमातृवाचीतिशुम्भःकथं
ब्रूयात्तामेवाभिगंतुकामउच्यते ॥ शुम्भादन्येषांसाअम्बिकैवेतितस्यांचण्डमुण्डादीनांस्मणाभिलाषोनकर्त्तव्यःइयंहियुष्माकमंबैवेतिसूचयितुमंबिकामित्यु
क्तं ॥ मातृगमनंहिपशुपक्षीतरेषुस्वतएवगर्हितइतिशुम्भानुकूलोर्थः ॥ देव्यनुकूलस्त्वेषः ॥ तस्यां हतायां दुष्टायां सिंहे च विनिपाः आतिते ॥ शीघ्रमाग
म्यतां बद्धा गृहीत्वा तामथांबिकां इतिपदच्छेदः ॥ हतायांइतिहतेर्गत्यर्थेकर्मणिक्तः ॥ विनिपाइतिपैशोषणेकर्त्तरिक्विप् ॥ विशेषेणनितरांपायतिशत्रू
नूशोषयतिविनिपा तयाविनिपादेव्या आतितेइति ॥ अततंआतःभावेघञ् ॥ आतःसंजातोस्याःआतिताहेआतितेदेवि अम्बिका ॥१७३॥
शब्देनदेवीहननंविवक्षितं॥तर्हि ॥ अविरविलबिअवलंसनेइत्यतःकर्त्तरिण्वुलिवोरकादेशेइत्वेचअम्बतेशत्रूणांगलेध्विति अम्बिकायारज्जुःविवाहकृता॥ इ

शब्देनदेवीहननंविवक्षितं॥तर्हि ॥ आधारवलीबअवलसनइत्यतःकर्त्तारिण्वुलिवारकादेशः...

तिविवक्षितविग्रहाः ॥ अत्रार्यदेव्यनुकूलोऽन्ययउच्यते ॥ हेसिंहे च ॥ अन्यत्र च आनिते ... तिविपक्षितविग्रहाः ... देव्या अम्बिकाशत्रुगृहेपुम्बिकापाशरज्जु
र्यांदैत्यसेनायांहतायांगतायामुपस्थितायांसत्यामथानन्तरंविनिपातविशेषणनितरांपार्यतयाशत्रून्शोपयंत्यास्त्वयादेव्या अम्बिकाशत्रुगृहेपुम्बिकापाशरज्जु
गृहीत्वातांसेनांबद्ध्वाशीघ्रमागम्यतांइतिसखीभिःदेवीनिगदितेतिदेवीष्टार्थसिद्धिः ॥ २० ॥ इतिश्रीमद्राजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजश्रीशंत
नुचक्रवर्तिविरचितायांदेवीमाहात्म्यटीकायां धूम्रलोचनवधरूपशीतितमोध्यायः ॥८३॥ ॥छ॥ ततोधूम्रलोचनवधानंतरंशुम्भेनाज्ञप्ता आदिष्टाश्चंडमुं
डपुरोगमाःदैत्याःचतुरंगबलोपेताःहस्त्यश्वरथपादातसमेताःअभ्युद्यतायुधाःसंनद्धबद्धोन्मुखायुधाःसंतःययुःजग्मुः॥ अज्ञप्ताइतिवादांतसूत्रेणनिपातितः

शीघ्रमागम्यतांबध्वागृहीत्वातामथांबिकां ॥ २० ॥ ॥ इतिमार्कंडेयपुराणेदेवीमाहात्म्येधूम्रलोचनवधरूपशी
तितमोध्यायः ॥८३॥ ॥छ॥ ॥ ऋषिरुवाच ॥ ॥ आज्ञप्तास्तेततोदैत्याश्चंडमुंडपुरोगमाः ॥ चतुरंगबलोपेतायधु
द्यताभ्युतायुधाः ॥ १ ॥ ददृशुस्तेततोदेवीमीषद्धासांव्यवस्थितां ॥ सिंहस्योपरिशैलेंद्रशृंगेमहतिकांचने ॥ २ ॥
तेदृष्ट्वातांसमादातुमुद्यमंचक्रुरुद्यताः ॥ आकृष्टचापासिधरास्तथान्येतत्समीपगाः ॥ ३ ॥ ॥छ॥

पुरोगमःपुरोगामी पुरःगच्छतःपुरोगमौ चन्डमुन्डौपुरोगमैयेषांते ॥ हस्त्यश्वरथपादातंसेनांगंस्याच्चतुष्टयं ॥ चत्वार्यंगानियत्रतत्बलंसैन्यंतेनउपेताःययुरे
वनपुनरायाताइतिभावः ॥ १ ॥ ततःआगताःतेचंडादयोदैत्यामहत्युच्चेकांचनमयेशैलेशृंगेहिमाद्रिशिखरेस्थितस्यसिंहस्यउपरिव्यवस्थितांविशेषेणाव
स्थितां ईषद्अल्पोहासोयस्याःसातांदेवींददृशुः ॥ कचदीप्तिबंधनयोःभावेल्युट् ॥ कंचनस्यपीतदीधितिरूपस्येदमधिकरणत्वेनकांचनंशृंगंतस्मिन्निति
व्युत्पाद्यतेरूपं ॥ विविधवर्णसान्निध्याद्वर्णोत्कर्षेदेव्यावर्णितः ॥ शत्रूणांतुविरुद्धवर्णदर्शनाद्विवर्णमुखतासूच्यते ॥ देवींईषद्धासांइतियथाप्राग्धूम्रलोचनः
ससैन्यःफलंप्रापतचंडादिरपिप्राप्स्यतिइतिदेव्याःसोत्प्रासोवर्णितः ॥ २ ॥ ततउद्यताउद्युक्ताःतेचण्डादयःतांदेवींदृष्ट्वासमादातुंउद्यमंचक्रुः ॥ हंतुंवात
समीपआसन् ॥ आकृष्टाःआच्छिताःचापायैःतेचअसीनांखड्गानांधराःधारकाःअसिधराश्चेतिद्वंद्वः ॥ आच्छिआयामेआच्छिताः ॥ ३ ॥ ॥छ॥

ततोदैत्यानुपसंहर्त्तुंअंबिकादेवीतान्आगतानरीन्दैत्यान्प्रतिउच्चैरतितरांकोपंचकारतदाकोपेनचास्यावदनंमुखंमष्याइवकृष्णोवर्णोयस्यतन्मषीवर्णमभूत् ॥ ४ ॥ यदंबिकामुखंकोपात्कृष्णवर्णमभूल्ललाटात्कालीनामदेवीदैत्यान्विनाशयितुंजातेत्याह ॥ शत्रुषुकुप्यंत्याःतस्यादेव्याःभृकुटीकुटिलात्भ्रुवौकुटीइवभ्रुकुटी ॥ इकोह्रस्वोऽङ्योगालवस्येतिवाऔत्तरपादिकंह्रस्वत्वंवाअत्वंचभ्रूकुट्यादीनांतेनउभयविकल्पेत्रैरूप्यं॥ भ्रूकुटीभ्रुकुटीभृकुटीवेति। भ्रूकुट्याःभ्रूभंगात्कुटिलंभुग्नंतस्माल्ललाटफलकात् ललाटंफलकमिवविशालत्वेनतस्मात्सकाशात्द्रुतंशीघ्रं करालवदनाकरालंभयंकरंदंतुरंवदनंयस्याःसा दंष्ट्राकरालवक्रा॥असिःखड्गःपाशश्चायुधमाकर्षणसाधनंतद्वतीअसिपाशिनीखड्गपाशपाणिःसतीकालीनामशक्तिःकापिअपरादेवीविनिःक्रांता ॥५॥ कीदृशीकालीधरतिबिभर्त्तिधराविविधानिचित्राणियस्यतत्विचित्रंखट्वायाअंगंतस्यधराविचित्रखट्वांगधरा ॥यद्वा॥ विचित्रंखट्वासुरस्यांगंशरीरंमंबकोस्थिपंजरःकंकलाख्यो

ततःकोपंचकारोच्चैरंबिकातानरीन्प्रति॥ कोपेनचास्यावदनंमषीवर्णमभूत्तदा ॥४॥ भृकुटीकुटिलात्तस्याल्ललाटफलकाद्द्रुतं॥कालीकरालवदनाविनिःक्रांतासिपाशिनी ॥५॥ विचित्रखट्वांगधरानरमालाविभूषणा ॥ द्वीपिचर्मपरीधानाशुष्कमांसातिभैरवा॥६॥अतिविस्तारवदनाजिह्वाललनभीषणा॥ निमग्नारक्तनयनानादापूरितदिङ्मुखा॥७॥

त्रगृह्यतेतस्यधरा ॥ प्रेतनरखट्वांगधरेतिचाहुः॥ नराणांप्रेतानांशिरसांमालानरमालास्रक्विभूषणंयस्याःसा॥नरमुण्डमालाविभूषणा॥मध्यमपदलोपीसमासः द्विधागताआपोयत्रतद्द्वीपंतदस्त्यस्यविवासत्वेनद्वीपीव्याघ्रः तस्यचर्मपरीधानंवासोयस्याः सा ॥ अन्येषामपिदृश्यतइतिदीर्घः ॥ शुष्कंमांसंयस्याःसानिर्मांसाअस्थिचर्ममात्रशरीरा ॥ अतएवातितरांभैरवातिभयंकरा ॥ अतिक्रांताभैरवान्भयंकरान्अतिभैरवा वा ॥ ६ ॥ पुनःकीदृशीअतिक्रांतंविस्तारंअधित्यकोविस्तारोयस्यवातद्वदनंयस्याःसाअतिविस्तारवदना॥ ललईप्सायांचुरादिराकुस्मीयआत्मनेपदी णिचिभावेल्युटिलालनंललनंत्वनित्यण्यन्तत्वपक्षेज्ञेयम् ॥ जिह्वायाललनं अवलेढुमिच्छातेनभीषणाभयंकरा ॥ निमग्नेनितरामन्तर्लीनेअन्तर्गतेआरक्तेनयनेयस्याःसानिमग्नारक्तनयना ॥ नादेनासिंहनादेनआसमन्तात्पूरितानिदिशांआशानामपिमुखानिद्वाराण्यन्तरालानियस्याःसा ॥ स्वांगाच्चोपसर्जनादसंयोगोपधाद्वाङीप् ॥ दिक्पूर्वपदात्ङीब्वा॥वाटाप्॥तेनङीपोपवादेनङीपामुक्तेटाबेव ॥ यद्देहप्रागादिदिक्शब्दपूर्वकत्वाभावात्ङीपामुक्तेटाबेव ॥ ७ ॥ ॥५॥ ॥६॥

साकालीदेवीवेगेनाभिपपात ॥ महासुरान्घातयन्तीघातंकुर्वतीताडयंतीसतीतत्रसैन्येसुरारीणांदैत्यद्विषांबलंसैन्यंकर्मअभक्षयत्घातयन्तीतिघातंकुर्वती
त्करोतीतिणिच्॥अन्यथाघ्नतःप्रयुंक्तेघातयन्तीत्युक्तेघ्नंतुमामसुराइतिप्रत्युक्तवतीत्यर्थःस्यात् ॥यद्वाहंन्तिर्गत्यर्थःघ्नतःगच्छतःपाल्यमानान्पलायध्वमितिप्र
युंजानाघातयंतीत्यूच्यते॥यद्वागच्छतःपुरुषान्गच्छतेतिप्रयुंजानागमयन्तीत्युच्यते ॥ यद्वामहासुरान्घातयन्तीत्यर्थः ॥ स्वार्थेशिष्टप्रयोगतोणिच् ॥ निवृ
त्तप्रेषणाद्धातोःप्रकृतेर्थेणिजेष्यते ॥ धात्वर्थानुप्रवेशोपिबुद्ध्यारोपात्णिचंविनेतिवचनात् ॥ वेगःप्रवाहजवयोः॥ ८॥पुमान्पार्ष्णिस्तयोरधः॥स्तयोः गुल्फ
योरधःपश्चाद्भागः पार्ष्णिरिहोपमानात्पार्ष्णिमिवपार्ष्णिंगृह्णंतिअवष्टभ्नन्ते पार्ष्णिग्राहाः॥पार्ष्णिग्राहास्तुपृष्ठतः ॥ गजानांतुपार्ष्णिग्राहाःशिक्षकाःपृष्ठगाः
अंकुशोऽस्त्रीसृणिस्त्रियां ॥ अंकुशान्गृह्णंतीत्यंकुशग्राहाः ॥ कर्मण्यण् ॥ युध्यन्तेप्रहरंतियोधाःपचाद्यच् ॥ घंटागजानांपार्श्ववर्तिन्यःनिद्रालस्यवारिण्यो

पार्ष्णिग्राहांकुशग्राहयोधघं
सावेगेनाभिपतिताघातयंतीमहासुरान् ॥ सैन्येतत्रसुरारीणामभक्षयततद्बलं ॥ ८ ॥ पार्ष्णिग्राहांकुशग्राहयोधघं
टासमन्वितान् ॥ समादायैकहस्तेनमुखेचिक्षेपवारणान् ॥९॥ तथैवयोधंतुरगैरथंसारथिनासह ॥ निक्षिप्यवक्त्रेदश
नैश्चर्वयंत्यतिभैरवं ॥१०॥ एकंजग्राहकेशेषुग्रीवायामथचापरं ॥ पादेनाक्रम्यचैवान्यमुरसान्यमपोथयत् ॥ ११॥

लंकारार्थाश्चतत्समन्वितान्वारयंतीअरीनितिवारणाःगजाः ॥ नंद्यादित्वाल्युः ॥ एकेनहस्तेनसमादायसंक्षिप्यगृहीत्वामुखेचिक्षेपकालीदेवीतिसंबंधः ॥
पार्ष्णिग्राहादिनिर्घंटांतैःसहितान्गजान् ॥ चखादेत्यर्थः ॥ ९ ॥ किंकुर्वतीसाकाली तथैवगजानिवयोधंयोद्धारंअश्वारोहंजात्यैकवचनं ॥ तुरगैरश्वैःसमं
वक्त्रेनिक्षिप्यदशनैःदंतैःसाधनैरतिभैरवंअतिभयंकरंमृत्युंचर्वयन्तीत्युच्यते ॥ गतिबुद्धिप्रत्यवसानार्थेतिसूत्रेण आण्यंतावस्थायांयःकर्त्तासण्यंतेकर्मभवति
रथंसारथिनेत्यत्रजात्यैकवचनं ॥ रथान्सारथिभिःसहवक्त्रेनिक्षिप्यदशनैःसाधनैःअतिभैरवंमृत्युंचर्वयन्तीचर्वंतंचर्वेतिप्रयुंजानाभुंक्ष्वेतिप्रेरयंतीत्युच्यते ॥
अत्रयोधाःतुरगाःरथाःसारथयश्चचर्व्याःचर्वकोमृत्युः॥ पात्रंवक्त्रंपरिवेषिकाकालीसैवचर्वयन्तीमातापुत्रमिवेतिसमाधिः॥अत्राश्वारोहाःअयोद्धारः ॥ चर्वयन्ती
तिशप्श्यनोर्नित्यंनुम् ॥ चर्वयतीतिपाठेपिलिङ्व्यिषयेकालेव्यत्ययोबहुलंइतिलट् ॥ १० ॥ हस्त्यश्वरथविध्वंसनानंतरंपदातिरूपसैन्यंविध्वंसयितुमाह ॥ सा
कालीएकमसुरंताडयितुंकेशेषुजग्राह ॥ अथअपरंचदानवंग्रीवायांशिरोधौजग्राह ॥ साकालीअन्यंदानवंपादेनैवाक्रम्यअपोथयत्हिंसितवती ॥ यद्यपिपु

ध्यत्युधतिहिंसार्थेभासार्थेपोथयेदित्यभिधानात्चुरादौपुथभासार्थइतिदृश्यते तथापिधात्वनेकार्थत्वेनपुथहिंसार्थइत्यपिज्ञेयः॥अथवा अपोटयदितिपाठः पुटसंचूर्णनेचुरादिः ॥ असूदयदितिपाठेषूदहिंसायांचुरादिः ॥ अन्यंदानवंउरसाक्रम्यापोथयत् ॥ ११ ॥ साकालीदेवीतैःचण्डमुण्डादिभिरसुरैर्मुक्तानिप्रयुक्तानिशस्त्राणिखड्गादीनिहस्तस्थानितथामहांत्यस्त्राणिआग्नेयवायव्यादीनिक्षेप्याणिमुखेनजग्राह ॥ अपिचतानिशस्त्राणिमहास्त्राणिचमुखेनगृहीत्वादशनैःसाधनैःतयाकाल्यादेव्यामथितान्यपि ॥ मथविलोडनेविलोडितानिचूर्णानिशस्त्रमस्त्रमायुधंतिअयुधत्वेनएकत्वेपितत्तज्जगत्याकारप्रयोगभेदेनभेदोस्त्येवतयोरित्याहुः ॥ देवीशक्तिर्विचित्रातेनघटतएवायमर्थः॥१२॥साकालीदेवीदुरात्मनांदुष्टाशयानांबलिनांचण्डादीनांतत्प्रसिद्धंबलंसैन्यंममर्द ॥ मृदस्तितिक्षयांक्षात्क्र्यादिःलिट्॥चुक्षोदचूर्णीचकार॥अन्यान्दैत्यानभक्षयत्च॥तथाअन्यान्दैत्यानताडयत्॥तडआघातेचुरादिः॥१३॥तयाकाल्यादेव्याकेचिदसुराःअसि

## तैर्मुक्तानिचशस्त्राणिमहास्त्राणितथासुरैः ॥ मुखेनजग्राहरुषादशनैर्मथितान्यपि ॥ १२॥ बलिनांतद्बलंसर्वमसुराणांदुरात्मनां ॥ ममर्दाभक्षयच्चान्यानन्यांश्चाताडयत्तथा ॥ १३॥ असिनानिहताःकेचित्केचित्खट्वांगताडिताः ॥जग्मुर्विनाशमसुरादंताग्राभिहतारणे ॥ १४ ॥ क्षणेनतन्महासैन्यमसुराणांनिपातितं ॥ दृष्ट्वाचंडोभिदुद्रावतांकालीमतिभीषणां ॥ १५ ॥ शरवर्षैर्महाभीमैर्भीमाक्षींतांमहासुरः॥ छादयामासचक्रैश्चमुंडःक्षिप्तैःसहस्रशः ॥ १६ ॥

नामण्डलाग्रेणनिहताःताडिताःसंतःविनाशंजग्मुः॥तथाकेचिदसुराःदंताग्राभिहताःविनाशंजग्मुः॥खट्वायाअंगंअंघ्रिःतेनताडिताः खट्वेहपितृभूमिस्थाःश्मशानसिद्धिलब्धिदा देवतातद्दत्तमंगमायुधमप्रतिहतशक्तिकं ॥ अन्येत्वाहुः खट्वासुरशरीरपंजरःखट्वाख्यमंगमिति ॥ अन्येतुप्रेतनरशरीरकीकसपंजरःकंकालःखट्वांगमित्याहुः ॥ दंतानामग्राःभागाःतेपुवाभागास्तैरभिहताः ॥ १४॥ काल्यादेव्याक्षणमात्रेणयद्वाक्षणेनरणोत्सवेन ॥ तत्प्रसिद्धंमहद्बहुलंचंडादीनांसैन्यंनिपातितंदृष्ट्वाप्रचंडविक्रमःचंडोदैत्यःतामतिभीषणांअतिभयंकररूपविक्रमांकालींदेवींअभिदुद्राव ॥ अभिमुख्येनोपद्रोतुमाडुढौके ॥ क्षणेनतद्बलंसर्वमसुराणामितिपाठेपिसएवार्थः ॥ अतिभीषणंइतिपाठेतुक्रियाविशेषणमेतत ॥ इगन्तौलिदि ॥ अतिभीषयतेअतिभीषणानंद्यादित्वाद्युः ॥ १५॥ चंडस्तामभिद्रुत्यकिमकार्षीदित्यतआह॥शरशणांवर्षाणिसंपाताःतैःमहांतिबहुलानिभीमानिघोराणितैःभीमेभयंकरेअक्षिणीयस्याःसातां॥ बहुव्रीहौसक्थ्यक्ष्णोः

स्वांगात्पच्समासांतः ॥ महानसुरःमुंडामस्तकानिक्षिप्तान्यपनीतानियैः तानिमुंडक्षिप्तानिक्षिप्तमुंडानि ॥ वाहिताग्न्यादिष्विति परनिपातः ॥ सहस्रेणसह
स्रशःसंख्यैकवचनाच्चवीप्सायांशस् ॥ कुर्वंत्यनेनेतिचक्रं॥घञर्थेकविधानं ॥ कृञादीनांचकेद्वेभवतःइतिवक्तव्यं ॥ अथान्वयः ॥ महासुरःचंडः महाभीमैर
तिभयंकरैःशरवर्षैःभीमाक्षींभयंकरदृष्टिंकालींदेवींछादयामास ॥ छदसंवरणे चुरादिः॥किंच अन्येत्वाहुः ॥ चण्डःशरवर्षैःछादयामास॥मुण्डस्तुक्षिप्तैरस्तैः
चक्रैरायुधैःछादयामासेति ॥तत्तुउत्तरेअथमुण्डोभ्यधावत्तामितिप्राधान्येनपृथङ्मुण्डस्य युद्धारम्भेणचिरोत्स्यते ॥ तस्माच्चण्डएवशरवर्षैःचक्रैश्चछादयामा
सेतियुक्तंवक्तुंततश्चात्रसविसर्गोमुण्डशब्दःपाठ्यतां ॥ किंतुनिर्विसर्गःकृतसमासश्च ॥ १६ ॥ तानिचण्डेनदैत्येनप्रयुक्तानिअनेकानिचक्राणिकर्तृणित
न्मुखंतस्याःकाल्याःमुखंकर्मविशमानानिप्रवेशनशीलानि बभुः भादीप्तौ शुशुभिरे ॥ कानीवअर्कबिंबानीव ॥ यथासुबहूनिअर्कस्यबिंबानिमण्डलानि

तानिचक्राण्यनेकानिविशमानानितन्मुखं ॥ बभुर्यथार्कबिंबानिसुबहूनिघनोदरं ॥ १७ ॥ ततोजहासातिरुषाभी
मंभैरवनादिनी ॥ कालीकरालवक्त्रांतदुर्दर्शदशनोज्ज्वला ॥ १८ ॥ ॥छ॥ ॥छ॥

घनस्यमेघस्यउदरंअभ्यन्तरंप्रविशमानानिभांतितथाचक्राणीति ॥ नेर्विशइत्यात्मनेपदविधौनेरुपसर्गस्याश्रयणादिहशानच् ॥ कस्तर्हिताच्छील्यवयोव
चनशक्तिषुचानश्प्रत्ययोनादेशोलटः नलोकाव्ययेत्यादौषष्ठीप्रतिषेधविधौतृन्नितिलटःशतृच्इतितृशब्दमारभ्यतृनोनकारेणप्रत्याहृत्याश्रयणाच्चानश्योगे
षष्ठींबाधित्वाद्वितीया व्यत्ययोबहुलंइत्यात्मनेपदेतुलटःशानचिलादेशयोगेषष्ठीप्रतिषेधाद्वितीया ॥ विशप्रवेशनेसकर्मकः ॥ उपदाविविशुस्तस्यनोत्सेकः
कोशलेश्वरमितिवत् ॥ उत्पातादौबहून्यर्कबिंबानिसम्भवेयुः ॥ अभूतंचौपम्यंद्रष्टव्यं ॥ अर्कःस्फटिकसूर्ययोः॥ चक्रंराष्ट्रेरथांगेचसैन्येशस्त्रेचकीर्तितं ॥ घ
नोमेघेमूर्तिगुणेत्रिषुमूर्त्तिनिरंतरे ॥ १७॥ ततोरणोत्सवोल्लासतःकालीदेवीअतिरुषाक्रुधाभीमंभयंकरंयथास्यात्तथा जहासहसितवती ॥ कीदृशीभैरवंभयं
करंनदतीभैरवनादिनी ॥ यद्वाभैरवःकालाग्निरुद्रस्तद्वन्नदतिगर्जतिइतिभैरवनादिनी ॥ भैरवंनादयतिनादोपेतंकरोतिदानवपशुबलिभोगोत्सवतःकृतशृंग
नादंकृतवतीवा ॥ पुनःकीदृशीकरालंवक्त्रंतस्यअंतःमध्येदुर्दर्शाःदुःखेनदृश्यमानायेदशनाःदंताःदंष्ट्राःतैरुज्ज्वला॥हासःशुभ्रःतेनकालीकृष्णापिसतीउज्ज्वले

तिवर्णोत्कर्षोक्तिः ॥ १८ ॥ साकालीविजिगीषुःसतीमहासिंमहाखड्गंउत्थायउत्थाप्यसज्जीकृत्यअंतर्भावितण्यर्थस्तिष्ठतिः ॥ यद्वा ॥ उत्थायउद्यम्यऊर्ध्वी कृत्यउत्पूर्वस्तिष्ठतिः क्वचित्प्रयोगवशतोगतिवचनःसकर्मकः ॥ यद्वा ॥ उत्ताय्येतिपाठः ॥ तयगतौणिच् ॥ महासिंउत्तयमानंप्रयुज्यचण्डमधावत ॥ ततःकिंगृहीत्वेत्यादिः ॥ अस्यचण्डस्यकेशेषुगृहीत्वाआकृष्यतेनप्रसिद्धेनासिनाशिरोमस्तकंआच्छिनत् ॥ उत्थायचमहासिंहंइतिपाठे ॥ महांतंसिंहंउत्था यारुह्यदेवीचण्डमधावतेतिसंबंधः॥अथवामहासि हं देवीतिच्छेदः ॥ रुषोकौतुहमव्ययं॥ देवीमहासि हं उत्थाय्यउत्तोल्यहंइतिरुषाचण्डमधावतअतएवते नासिनाअच्छिनदित्यन्वयः ॥ उत्थायचमहासिंहादित्येवोचुः ॥ उत्थायअवरुह्य ॥ उत्थाय्यचमहासिंहंइतिपाठे ॥ सुपिस्थःकः ॥ उच्चैस्तिष्ठति उत्था अयगतौ ॥ आङ्पूर्वः क्तोल्यप् ॥ आसमंतादयित्वाआय्य ॥ देवीउत्थाउत्थितासतीमहासिंहंचआय्यआगत्यप्राप्येत्यन्वयः ॥ अत्रैवपाठेऽर्थांतरं ॥

उत्थायचमहासिंहंदेवीचंडमधावत ॥ गृहीत्वाचास्यकेशेषुशिरस्तेनासिनाच्छिनत् ॥ १९॥ छिन्नेशिरसिदैत्येंद्रश्चक्रे नादंसुभैरवं ॥ तेननादेनमहतात्रासितंभुवनत्रयं ॥ २० ॥ अथमुंडोभ्यधावत्तांदृष्ट्वाचंडंनिपातितं ॥ तमप्यपातय द्भूमौखट्वांगाभिहतंरुषा ॥ २१ ॥ हतशेषंततःसैन्यंदृष्ट्वाचंडंनिपातितं ॥ मुंडंचसुमहावीर्यंदिशोभेजेभयातुरं॥२२॥ शिरश्चंडस्यकालीसागृहीत्वामौंडमेवच ॥ प्राहप्रचंडाट्टहासमिश्रमभ्येत्यचंडिकां ॥ २३ ॥ ॥छ॥

महासिंहंचआय्यप्राप्येति ॥ उत्तरार्धान्वयःपूर्ववत् ॥ १७॥ दैत्येंद्रःचण्डस्तदैवशिरसिदेव्याछिन्नेसतिशिरश्छेदसमयएवपशुवत्सुभैरवंसुष्ठुभयंकरंनादंमु खेनध्वनिंचक्रे ॥ तेनमहतानादेनशब्देनभुवनत्रयंत्रासितं ॥ त्रसुउद्वेगेणिचिकर्मणिक्तः उद्वेगंप्रापितं ॥ यद्वात्रासःसंजातोऽस्यतारकादिभ्यइतच् ॥ किमसौ चंडःछिन्नशिराअपिमायावित्वात्पुनरुत्थितोयोद्धुंकथमन्यथायंनादोस्येतिसंजातत्रासमभूद्भुवनत्रयं॥ २०॥ अथचण्डःमहासुरःकाल्यादेव्यानिपातितं भ्रंशितंचण्डंदृष्ट्वातांकालीमभ्यधावत् ॥ अथकालीदेवीरुषातंमुण्डमपिखट्वांगेनाभिहतंताडितंपरासुंभूमावपातयत् ॥ मुण्डकेत्रिषुमंडिते ॥ दानवेपुंसिमुंडः स्यान्मस्तकेतुद्वयोरदः ॥ मुण्डितंत्रिषुलिंगेषुमुंडोमुण्डत्वयोगिनि ॥ २१ ॥ देव्याहतेभ्यःशेषमवशिष्टंसैन्यंकर्तृसुमहावीर्यंसुमहद्वीर्यंप्रभावोयस्यसःतंचण्डं मुण्डंचदेव्यानिपातितंदृष्ट्वाभयातुरंसत्ततःयुद्धभूमितःसकाशादपगत्यदिशोभेजेअपलायतभयेनातुरंविह्वलं ॥ २२ ॥ साकालीदेवीचण्डस्यासुरस्यशिरः ॥१७६॥
तथामुण्डस्यासुरस्येदंमौंडंशिरश्चेतिमस्तकद्वयंगृहीत्वा ॥ [illegible] अट्टहासेनमिश्रंमिलितंप्रचण्डाट्टहासगर्भंयथास्यात्तथाअभ्येत्यैव



अतिक्रमागत्यैवचंडिकांअंबिकामासाद्यशक्तिंप्राह ॥ प्राहेत्यव्ययंकालसामान्यमात्रे ॥ [illegible]

अंतिकमागत्यैवचंडिकांअंबिकामासाद्यशाकिंप्राह ॥ प्राहेत्यस्यस्वयंकालसामान्यमपीति ॥ [illegible]
लुलोकेतथेयमवोचत् ॥ यद्वायौत्वांपरदेवतांभुवनेश्वरींप्रागालोक्यगत्वाशुम्भायगृहाणेत्यकथयतांताविमौचण्डमुण्डौपुनर्द्रष्टुमागतौतावद्वलोकयलोकमा
तरितिसोत्प्रासोहासोयुक्तएवेत्यलंविस्तरेण ॥ २३ ॥ कालीकिमब्रवीच्चंडिकामित्याह ॥ काल्युवाच ॥ हेदेवितवमहापशूद्वौचण्डमुण्डौअत्रयुद्धयज्ञेयुद्धंयज्ञ
इवतस्मिन्विषयेमयाकाल्याउपाहृतौसमर्पितौउपहारीकृतौस्तः ॥ अतश्चयुद्धंयज्ञोयस्याःसाहेयुद्धयज्ञेदेवकार्यकारिणित्वंस्वयमेवशुम्भंनिशुम्भंचद्वौमहाप
शूदेवगणप्रीत्यैहनिष्यसि ॥ यद्वा ॥ युद्धयज्ञेविषयेतथादेवगणप्रीत्यैयज्ञेमहापशुर्नरः । तथामयाऋत्विजेवचण्डमुण्डौनाममहापशूद्वौहतौ ॥ अतःपरंशुम्भं
निशुम्भंचमहापशूत्वमेवहंतुमर्हसीतिभावः ॥ २४ ॥ ततोनंतरंकल्याणीकल्यांवाचंशूभांअणंतीकथयंतीचंडिकाभगवतीतौमहासुरौचण्डमुण्डौकाल्या

मयातवात्रोपहृतौचंडमुंडौमहापशू ॥ युद्धयज्ञेस्वयंशुंभंनिशुंभंचहनिष्यसि ॥२४॥ ऋषिरुवाच ॥ तावानीतौततो
दृष्ट्वाचंडमुंडौमहासुरौ ॥ उवाचकालींकल्याणीललितंचंडिकावचः ॥२५॥ देव्युवाच ॥ यस्माच्चंडंचमुंडंचगृहीत्वा
त्वमुपागता ॥ चामुंडेतिततोलोकेख्यातादेवीभविष्यसि ॥२६॥ इतिमा० पु० चंडमुंडवधश्चतुरशीतितमोध्यायः ॥८४

आनीतौदृष्ट्वाकालींदेवींललितंईप्सितंमनोहरंवचःउवाचउचितमुक्तवती ॥ २५ ॥ हेकालित्वंयस्मात्कारणाच्चण्डंमुण्डंचगृहीत्वामामुपागतासिततोलोकेभु
वनेचामुंडेतिख्यातादेवीभविष्यसि ॥ हृस्वाभ्यांचण्डमुण्डौ (तु) किलागृह्णादसौयतः।मत्वर्थकेऽच्यतश्चण्डमुण्डादेव्यैवकथ्यते ॥ ततःपृषोदरादित्वात् शि
ष्टशब्दप्रयोगतः । चण्डशब्दस्यचात्वेनचामुण्डेतिप्रसिध्यति ॥ अतश्चाहुः॥पृषोदरादित्वाच्चण्डमुण्डस्थानेचामुंडासाध्येति॥यत्यस्यकरेस्तितत्तस्यास्तीतित
द्वान्सभवतिदंडीतिवत् ॥ यंकरेणयागृह्णात्साचंडमुंडवतीकालीति मत्वर्थेअर्शआदित्वादचिस्त्रियांटापिचंडशब्दस्यपृषोदरादित्वाच्चाइत्यादेशेचंडमुडैवचा
मुंडेतिचंडिकाभिप्रायः ॥ यद्यपिशिरसिएवकाल्यागृहीत्वाआनीतेनतुचंडमुंडौ ॥ तथापिकापिग्रामैकदेशेदग्धेग्रामोदग्धइतिवच्चंडमुंडैकदेशयोः शिरसोश्चं
डमुंडौसमुदायौतयोःप्रयुक्तौशिष्टप्रयोगतः ॥ कश्चिच्चाख्यत् ॥ चस्तस्करःसमाख्यातश्चंद्रमाश्चसमीरितः॥इत्यभिधानतःचान्तस्करान्मुंडयतिखंडयतिच ।

मुंडा॥चमुंडैवचामुंडेत्यन्येषामपिदृश्यतइतिपूरुषवद्दीर्घत्वमिति ॥ तन्न ॥ यस्माच्चंडंचमुंडंचेतिचंडिकाभिप्रायतश्चामुंडेतिप्रकृतार्थहानादप्रकृतार्थाभ्यनुज्ञानात्परमर्षिप्रणीतरूढशब्दार्थविग्रहव्याकोपप्रसंगाच्च॥२६॥ इतिमार्कंडेयपुराणे श्रीराजाधिराजतोमरान्वयश्रीमदुद्धरणात्मजशंतनुचक्रवर्तिविरचितायां देवीमाहात्म्यटीकायांचंडमुंडवधः चतुरशीत्यध्यायः॥८४॥अस्यश्लोकयुग्मस्यैकक्रियाकत्वादेककर्तृकत्वादेकान्वयताच॥ तयाकाल्यादेव्याचंडेनिहतेसति तथामुंडेचविनिपातितेसतितयैवचसैन्येषुबहुष्वसंख्यातेषुक्षयितेषुसत्सुततोनंतरंकोपपराधीनचेताः क्रोधपरवशचित्तःप्रतापवान्व्युग्रोग्रतेजस्कश्चभूत्वा असुरेश्वरःशुम्भःदैत्यानांसर्वसैन्यानांउद्योगंदेवींचंडिकांप्रतिप्रयाणोत्सुकतामादिदेश॥ देवींप्रतिसेनाभिरभियातयूयमभिषेणयतेत्यादिक्षत्॥ देवींप्रत्यभिषेणयितुंउद्योगंकुरुतेत्याज्ञापयामासदैत्यसैन्यानीतिभावः॥ उद्योगंसर्वसैन्यानामित्येवसिद्धेदैत्यानांइतिप्राधान्यख्यापनार्थं॥ यद्वा ॥ सर्वाणिसैन्यानियेषांते

॥ ऋषिरुवाच ॥ ॥ चंडेचनिहतेदैत्येमुंडेचविनिपातिते ॥ बहुलेषुचसैन्येषुक्षयितेष्वसुरेश्वरः ॥ १ ॥ ततःकोपपराधीनचेताःशुंभःप्रतापवान् ॥ उद्योगंसर्वसैन्यानांदैत्यानामादिदेशह ॥ २ ॥ अद्यसर्वबलैर्दैत्याःषडशीतिरुदायुधाः ॥ कंबूनांचतुराशीतिर्निर्यांतुस्वबलैर्वृताः ॥ ३ ॥ ॥छ॥ ॥छ॥

सर्वसैन्याःरक्तबीजप्रभृतयःतेषांउद्योगमादिदेश ॥ क्षयोनाशःसंजातोयेषांतानिक्षयितानि ॥ यद्वाक्षपितेषु ॥ क्षपप्रेरणेचुरादिः ॥ प्रेरितेषुद्रावितेषुप्राणेभ्योदूरीकृतेषुनाशिष्वितियावत्॥कोपेपराधीनंअधीनंचेतोयस्यसः ॥यद्वाकोपेपरंअतिशयितंअधीनंचेतोयस्यसः ॥ असुराणांईश्वरः ॥ यद्वा ॥ असून्प्राणान्रातिगृह्णातिअसुरःमृत्युःईश्वरोयस्यसःआसन्नमृत्युरित्यर्थः ॥ १ ॥ २ ॥ शुम्भआदिशति ॥ अद्यास्मिन्नहनिइदानींवाममाज्ञयाषडशीतिदैत्याःप्रधानभूताः उदायुधाःउद्यतशस्त्राःसंतःसर्वैःबलैःसैन्यैःचतुरंगैःवृताःवेष्टिताःसंतः निर्यांतुदेव्यासमंयोद्धुं ॥ षड्भिरधिकाशीतिःषडशीतिःशाकपार्थिवादित्वात्समासः ॥ विंशत्याद्याःसदैकस्मिन्संख्याःसंख्येयसंख्ययोः ॥ किंकंबूनांकंबुनाम्नांदैत्यानांचतुराशीतिःबृंदभेदाःस्वबलैर्वृताः निर्यांतु ॥ चतुर्भिरधिकाशीतिःचतुरशीतिःपूर्ववदेकवचनं ॥ यदिचतुराशीतिर्निर्विसर्गःपाठः॥ तदाचतस्रःआशीतयःकंबूनांचक्रव्याःसमाहृताइतिविगृह्यसमाहारद्वंद्वः ॥ कंबूनांचतुरा ॥१७७॥

शीति कर्तुं ॥ स्वच्छंदैर्वृतंसत् । निर्यांतुइतिएकवचनांतत्वेनयोज्यं ॥ एकत्वोक्तितःयथावृक्षःफलतितथाचफलतिवृक्षएकवचनसंगतिः ॥ चतुराशीतिपाठे ॥
आन्महतइत्यत्रसूत्रेआदितियोगविभागः शिष्टप्रयोगतः॥प्रागेकादशभ्योछंदसीतिसूत्रकारव्यवहारव्यवहाराच्छिंगायोगविभागादिष्टसिद्धिरित्याखंतत्वेरफा
त्परतएव ॥ पृषोदरादित्वाद्वा ॥ अन्येषामपिदृश्यतइतिच ॥ अशीतिशब्दादीकारस्यदीर्घत्वंद्रष्टव्यं ॥ नैतत्सर्वत्रकर्तव्यमिति ॥ चतस्रःआशीतयइत्यत्र
दशांतैकादिकासंख्यासंख्येयेष्वेवचत्रिषु ॥ कंबुःशंखः चतुरशीतिशंखपरिमिताःसेनाःताभिःसहिताःदैत्याः ॥ ३ ॥ वैप्रसिद्धानिकोटिवीर्यनामधेयानिको
टिगुणितवीर्याणिअसुराणांपंचाशत्कुलानिवृंदानिनिर्गच्छंतुममाज्ञयादेव्यासमंयोद्धुं ॥ कोटिसंख्यानिपंचाशदितितुपाठे ॥ असुराणांकुलानिनिर्गच्छंतु॥
कति पंचाशत् ॥ पुनश्चकतितानि कोटिरितिसंख्यायेषांपंचाशतःकुलानांतानिकोटिसंख्यानि ॥ एवंचैकत्रपंचाशत्कोटिसंख्यान्यसुराणांकुलानि ॥ धू

**कोटिवीर्याणिपंचाशदसुराणांकुलानिवै ॥ शतंकुलानिधूम्राणांनिर्गच्छंतुममाज्ञया ॥ ४ ॥ कालकादौर्हृदामौर्याः**
**कालकेयास्तथासुराः ॥ युद्धायसज्जानिर्यांतुआज्ञयात्वरितामम ॥ ५ ॥ इत्याज्ञाप्यासुरपतिःशुंभोभैरवशास**
**नः ॥ निर्जगाममहासैन्यसहस्रैर्बहुभिर्वृतः ॥ ६ ॥ ॥छ॥ ॥छ॥**

म्राणांधूम्रनाम्नांअसुराणांशतंकुलानि ॥ धौम्राणामिति पाठे ॥ धूम्रस्यापत्यानिपुमांसःधौम्राःशिवादित्वादण् ॥ अतइञोपवादः ॥ ४ ॥ कालकाः
कालकनामानोऽसुराःकालंयमरूपमात्मानंशत्रुभ्यःकायतिकथयतिकालकः ॥ कालकस्यापत्यानिकालकाःशिवादित्वादण् ॥ यद्वा ॥ कलंमंद्रंकायति
कलकःतस्येमेकालकाःकलककुलोत्पन्नाःदैत्याअथममाज्ञयात्वरितात्त्वरासंभ्रमे संभ्रमसहिताःसत्वराःसंतःदेव्यासमंयुद्धाययोद्धुंसज्जाःसायुधाःसंतःनि
र्यांतु ॥ तथातद्वद्दौर्हृदाअसुराःदुष्टंहृदयंयस्यसदुर्हृद्दैत्यः ॥ सुहृद्दुर्हृदौमित्रामित्रयोरितिनिपातः ॥ तस्यापत्यानिदौर्हृदाःदौर्हृदाख्यादैत्याः ॥ तथामौर्या
ख्याः ॥ मुरस्यापत्यानिगोत्राणिगर्गादित्वाद्यञ् ॥ यत्रञोश्चेतिलुक्कुतोत्रन ॥ छांदसत्वाच्छंदोवत्पुराणानिभवंति ॥ यद्वा ॥ मुरस्यभावःमौर्यंतद्वंतःमौर्याः
अर्शआदित्वादच् ॥ यद्वामुरस्यभावःमौरी ॥ ष्यञ्षित्वात्ङीष् ॥ मौरीमर्हंतिमौर्याः दंडादिभ्योयः तेपिनिर्यांतु ॥ तथाकालकायाअपत्यानिकालकेयनामा
नोसुराः ॥ स्त्रीभ्योढक् ॥ कालकवंशजाताः ॥ शुभ्रादिभ्यश्चेतिढक् ॥ ५ ॥ इत्येवमसुरानाज्ञाप्यादिश्यभैरवशासनःभैरवंभयंकरंशासनंयस्यसः ॥ यद्वा ॥

भैरवान्मृत्योःशासनंयस्यसःआसन्नमरणत्वात् ॥ असुरपतिःशुम्भःबहुभिर्दानवैः वृतःसन्निर्जगामदेव्यासमंयोद्धुं ॥ किंभूतैःबहुभिःमहासैन्यसहस्रैःमहांतिसैन्यसहस्राणियेषुतैः॥६॥ आयांतंशुम्भं ॥ यद्वा ॥ सेनायांसमवेतायेसैन्यास्तेसैनिकाश्चते ॥ सैन्यःपुंसिसेनायांसमवेतः सेनायावेतिण्यः ॥ यद्वा ॥ आयांतंशुम्भं अतिस्थाने अपिशब्दश्चार्थे ॥तथायमन्वयः ॥ अतिभीषणमतिभयंकरंतत्सैन्यंयस्यशुंभस्यसतत्सैन्यः ॥ यद्वा ॥ तेसैन्याःसेनायांसमवेताःसंमिलिताहस्त्यश्वरथपादातादिसमूहायस्यसतत्सैन्यः ॥ तंआयांतंशुम्भंदृष्ट्वाचंडिकादेवीज्यास्वनैः धनुष्याकृष्टामौर्वीज्या तट्टंकारध्वनिभिः ॥ धरणीगगनांतरंद्यावापृथिव्यंतरालंपूरयामास ॥ अथद्वितीयोऽन्वयः ॥ अतितरांभीषणोभयंकरःतत्सैन्यःतस्यशुम्भस्यसैन्यःसेनायांसमवेतोहस्त्यश्वरथपादातसमूहः॥ तंआयांतंदृष्ट्वा॥अथतृतीयोन्वयः ॥ अतिभीषणंशुंभमायांतंदृष्ट्वाअतिभीषणंतत्सैन्यंतस्यशुम्भस्यसैन्यमपिसेनांआयात् आगच्छद्दृष्ट्वा अयांतंशुम्भं

**आयांतंचंडिकादृष्ट्वातत्सैन्यमतिभीषणं ॥ ज्यास्वनैःपूरयामासधरणीगगनांतरं ॥ ७ ॥ सचसिंहोमहानादमतोवकृतवान्नृप ॥ घंटास्वनेनतन्नादमंबिकाचाप्यबृंहयत् ॥ ८ ॥ धनुर्ज्यासिंहघंटानांनादापूरितदिङ्मुखा ॥ निनादैर्भीषणैःकालीजिग्येविस्तारितानना ॥ ९ ॥**

॥छ॥ आयात्आगच्छत्तत्सैन्यंशुम्भसैन्यंनपुंसकलिंगं पूरीआप्यायनेव्यापयामास॥आयांतमितिशत्रंतं ॥ आयातंइतिपाठेकर्त्तरिक्तः तंशुम्भंतत्सैन्यंच॥७॥ सुमेधाऋषिःसुरथंराजानंसंबोधयति ॥ हेनृपदत्तावधानोभव ॥ ततःधनुर्ज्यास्वनानंतरंससिंहश्चातीवसुतरांमहांतंनादंकृतवान् ॥ अंबिकापिघंटायाःस्वनेननादेनतन्नादंसिंहनादंअबृंहयत् अवर्धयत् ॥ बृहिवृद्धौहेतौणिचूलट्॥ अडागमः ॥ अंबिकाचोपबृंहयदितिपाठेआगमशासनानित्यत्वादडागमाभावः ॥ ततःसिंहइतिवापाठः ॥ ८ ॥ धनुर्ज्यानादेनसिंहनादेनघंटानादेनचआसमंतात्पूरितानिदिशांमुखानिययासा ॥ एवंविधाकालीतैस्त्रिविधैर्भीषणैःनिनादैःविस्तारिताननाविवृतास्यास्फारितमुखासतीजिग्ये ॥ जिजये जिअभिभवे । व्यत्ययोबहुलंइतिकर्त्तर्यात्मनेपदं ॥ लोकोत्कर्षेणववृते ॥ यद्वा ॥ शत्रूनभिबभूव ॥ यद्वाजिग्येइतिकर्मणिप्रयोगः ॥ तथाहि ॥ एवंभूतायाकालीदेवीतयाभीषणैर्नादैःशत्रुवर्गोजिग्ये अभिबभूवे ॥ जज्ञेइतिपाठे ॥ जनीप्रादुर्भावेआत्मनेपदी ॥ कालीभीषणैर्निनादैर्विस्तारिताननाजज्ञे ॥ दैत्यानत्स्यामीतिविवृतीकृतकरालवदनाजाता ॥ अथवाजज्ञेइतिज्ञाअवबोधनेकर्मणिलिडात्मनेपदं ॥ भीषणैर्निनादैर्याविस्तारिताननादैत्य

सैन्यानि सर्वाणि अमूनिप्रत्यवस्यतीतिविकृतिकृतकरालवक्त्रादस्यतेसाकालीतिदैत्यैःजज्ञेअज्ञायिसा ॥ सकलीसमूहैवर्तमानाकाकालीसकलीतितस्सात् श्यतःसंशयानैरथतैर्भीषणैर्निनादैर्विशेषचिन्हैर्विस्तारिताननासर्वसैन्यग्रासायविवृतास्याकालीतिदैत्यैरज्ञायीतिभावः ॥९ ॥ चतुर्दिशमित्येतत्पदंशकारांतं निनादविशेषणंचैतत् ॥ अथचेत्परिवारणक्रियाविशेषणंस्यात्तदादिशाशब्देनटाबंतेनसाधनीयं ॥ चतलःदिशोअधिकरणभूतायस्यतन्निनादस्यसचतुर्दिशं चतुर्दिक्षुव्याप्तं ॥ तासांधनुर्ज्यासिंहघंटानांनिनादंउपश्रुत्याकर्ण्यकुपितैःदैत्यसैन्यैः देवीआद्याशक्तिर्भगवती सिंहश्चवाहनीभूतः ॥ कालीचदेवीललाटोद्भ वा ॥ तथाचएताःतिलोपिशरौघैःशरव्रातैश्चतुर्दिशंयथास्यात्तथापरिवारिताः परिवेष्टिताःकारिताविद्धाइतियावत् ॥ हलंतादपिटापंचयथावाचानिशादि शेतिदिशाशब्दष्टाबंतोप्यस्ति ॥ चतलोदिशाअधिकरणभूतायस्मिन्शरौघपरिवारणेकर्मणितच्चतुर्दिशंक्रियाविशेषणानांकर्मत्वंनपुंसकैकत्वंचवक्तव्यं ॥

तन्निनादमुपश्रुत्यदैत्यसैन्यैश्चतुर्दिशं ॥ देवीसिंहस्तथाकालीशरौघैःपरिवारिताः ॥ १० ॥ एतस्मिन्नंतरेभूपविना शायसुरद्विषां ॥ भवायामरसिंहानामतिवीर्यबलान्विताः ॥ ११ ॥ ब्रह्मेशगुहविष्णूनांतथेंद्रस्यचशक्तयः ॥ शरीरे भ्योविनिःक्रम्यतद्रूपैश्चंडिकांययुः ॥ १२॥ ॥छ॥ ॥छ॥

॥ १० ॥ युग्मं ॥ हेभूप दत्तावधानोदेवीमहिमानमाकर्णय ॥ एतस्मिन्देवीदानवसंग्रामेप्रस्तुतेसतिअंतरेअवकाशेसमयेमध्येवा सुरद्विषांविनाशाय ॥ अमरसैन्यानांअमरसिंहानांदेवश्रेष्ठानांवाभवायभूत्यैअभिवृद्ध्यैस्थितयेचअतिवीर्यबलान्विताःशक्तयः सामर्थ्यलक्षणाः देवताश्चब्रह्मेशगुहविष्णूनांत थाइंद्रस्यचापिपंचानांतेषांशरीरेभ्योविनिःक्रम्यनिर्गत्यतद्रूपैःब्रह्मादिरूपैःतदाकारैःतादृशरूपैःचंद्रिकांययुःप्रविष्टवत्यः ॥ ब्रह्माचईशश्चरुद्रःगुरुश्चकुमा रःविष्णुश्चनारायणः ॥ ब्रह्मणःशरीराद्ब्रह्माणीनिर्गता ॥ रुद्रस्यशरीरात्माहेश्वरी ॥ कुमारशरीरात्कौमारी ॥ विष्णुशरीराद्वैष्णवी ॥ इंद्रशरीरादैंद्री एताःदे वींप्रापुरित्यर्थः ॥ भवःकल्याणसंसारसत्तावाप्तीशजन्मसु ॥ अमरसिंहानामितिपाठे ॥ अमराःसिंहाइवश्रेष्ठाःतेषां ॥ उपमितंव्याघ्रादिभिःसामान्याप्रयो गेसमस्यते ॥ अभ्यधुश्च स्युरुत्तरपदेव्याघ्रपुंगवर्षभकुंजराः ॥ सिंहशार्दूलनागाद्याःपुंसिश्रेष्ठार्थगोचराः॥बृंहतिवर्द्धतेब्रह्मा॥ईष्टेईशः ॥ गूहतेसेनांसंवृणोति गुहः ॥ वेवेष्टिव्याप्नोतिविशतिवाविश्वंविष्णुः ॥ इंदतिपरमैश्वर्येणराजतेइंद्रः ॥ शक्नोतिशक्तिः क्तिच् ॥ शक्यतेकर्त्तुमनयावाशक्तिः क्तिन् ॥ ११ ॥ १२ ॥

तद्रूपैरितियदुक्तंतदेवव्यक्तीकरोति ॥देवीदानवयुद्धंद्रष्टुमागतानांतेषांब्रह्मादीनांशरीरेभ्योविनिष्क्रम्यानुभावान्प्रकाश्यकायव्यूहेनप्रव्यक्ताकृतयोब्रह्माण्याद
यःशक्तयः चंडिकांशभूताःचंडिकांयुद्धायउत्साहयितुंययुरितिप्रागुक्तंतदनेनस्पष्टयति ॥ यस्यदेवस्यब्रह्मादेःयद्रूपंयआकारःयथाभूषणवाहनंभूषणवाहना
न्यनतिक्रम्ययस्यदेवस्ययद्भूषणंयद्वाहनंतद्देवतादृशमेववाहनमारूढवतीतच्छक्तिःतस्यदेवस्यसाशक्तिर्ब्रह्माण्यादिदेवतातद्देवायुधानिबिभ्रतीसतीहि नि
श्चयेअसुरान्योद्धुंआययौ ॥ देवीसान्निध्यंसंग्रामरंगस्थलींचाजगाम ॥ १३ ॥ हंसःयुक्तोयोजितोविमानःतस्मिन् तिष्ठतिहंसयुक्तविमानस्थाअक्षाणां
स्फटिकमणीनांसूत्रंजपमालाअक्षसूत्रंकमंडलुश्चताभ्यांसहवर्त्तमाना ॥ एवंविशेषेणब्रह्मणःशक्तिरसुरैःसहयोद्धुंआयातासाखलुब्रह्माणीत्याभिधीयते ॥ ब्र
ह्मणःस्त्रीब्रह्माणीअत्रानुगागमाभावाच्छिवागमप्रसिद्धंनामेदंकथ्यते ॥ अतएवनिरूढतामपेक्षितनियमसिद्धतामितिनारदर्षिः ॥ यद्वा ॥ वेदस्तत्त्वंतपोब्र

यस्यदेवस्ययद्रूपंयथाभूषणवाहनं ॥ तद्वदेवहितच्छक्तिरसुरान्योद्धुमाययौ॥१३॥हंसयुक्तविमानस्थासाक्षसूत्रक
मंडलुः ॥आयाताब्रह्मणःशक्तिर्ब्रह्माणीसाभिधीयते ॥१४॥माहेश्वरीवृषारूढात्रिशूलवरधारिणी॥महाहिवलयाप्रा
प्ताचन्द्रलेखाविभूषणा॥१५॥कौमारीशक्तिहस्ताचमयूरवरवाहना॥योद्धुमभ्याययौदैत्यानंबिकागुहरूपिणी॥१६॥

ह्मब्रह्माविप्रःप्रजापतिः ॥ अणशब्दे ॥ ब्रह्मअणतिकथयतिब्रह्माणी ॥ कर्मण्यणिस्त्रियांङीप् ॥ यद्वा ॥ ब्रह्माणमणतिमदीयोयमितिब्रह्माणी ॥ हंसोयति
विशेषेचप्राणश्वेतच्छदेषुना ॥ अतएवहंसैर्यतिविशेषैर्युक्तंविमानंविगतमानंपरंब्रह्मतत्रतिष्ठत्युपनिषद्रूपत्वादितिहंसयुक्तविमानस्थाब्राह्मीवाणीब्रह्माणीत्य
प्यर्थलेशः ॥ १४ ॥ वृषंवृषभंधर्मंवारूढा ॥ त्रीणीशूलानिशृंगाणिअग्राणियस्यतत्श्रेष्ठंत्रिशूलंत्रिशूलवरंधरतित्रिशूलवरधारिणी ॥ महांतःअहयःनागाः
वलयायस्याःसाएवंलक्षणाशक्तिःमहेश्वरस्येयंमाहेश्वरीप्राप्ताअसुरैःसमंयोद्धुमागता ॥ शुक्रलेमूषिकेश्रेष्ठेसुकृतेवृषभेवृषः॥अस्त्रीशूलंरुगायुधं ॥ देवाद्दतेवरः
श्रेष्ठेत्रिषुक्लीबंमनाक्प्रिये ॥ आवापकःपारिहार्यःकटकोवलयोस्त्रियां ॥ लेखाकलाप्रकृतौचित्यात्अन्यथालेखाराजिः ॥ १५ ॥ शक्तिरायुधंहस्तेयस्याःसाअ
जाद्यतष्टाप् ॥ प्रहरणार्थेभ्यःपरेनिष्ठासप्तम्यौभवतःइतिवक्तव्यं ॥ मयूरवरःश्रेष्ठमयूरःवाहनंयस्याःसा ॥ वाहनमाहितादितिणत्वंनाशंकनीयं । आहितत्वा 
भावात् ॥ नहिमयूरवरःवाहनमारोपितोस्तिवाहनेयदारोपितमुच्यते तदारोपितमाहितमुच्यते ॥ रूपंस्वरूपंआकारोवायस्याःसा ॥ गुहादिः॥गुहंकुमारमाकारेणरूपयतिदर्श



यतिगुहरूपिणी॥यद्वा॥गुहस्यरूपमस्यामस्तीतिगुहरूपिणी ॥ अतइनिः ॥ ऋन्नेभ्योङीप् ॥ यद्वा गुह...

यतिगुहरूपिणी॥यद्वा॥गुहस्यरूपमस्यामस्तीतिगुहरूपिणी ॥ अतइनिः ॥ ऋन्नेभ्योङीप् ॥ यद्वा गुहरूपंकरोत्यात्मानमितिवा [illegible] ॥ गुहरूपस्य
र्तिणिनिः ॥ अंबिकामाता ॥ कुमारस्येयंकुमारी॥१६॥ गरुडस्योपरि पूरणगुणेत्यादिना षष्ठीसमासप्रतिषेधः कृदंताश्रयस्यतेनतदुपरिमदुपरीतिवत्षष्ठी
तिसमासः॥संस्थितासम्यक्स्थिता ॥ शंखःपांचजन्यःचक्रंसुदर्शनंगदाकौमोदकीशार्ङ्गंधनुःहस्तिदंतःशृंगंतस्येदंशार्ङ्गंवैष्णवंधनुः ॥अन्यदीयंतुचापीयंशृं
गंमाहिषमुच्यते ॥ गवयंमाहिषंशृंगंशार्ङ्गंचापादियन्मयं॥ खड्गश्चनंदकस्तेषांसेनांगत्वादेकवद्भावेनपुंसकत्वं तच्छंखाद्यंहस्तेयस्याःसा ॥ विष्णोरियंवैष्ण
वीशक्तिर्देवतानारायणी ॥ तथैवतद्वदेवब्रह्माण्यादिवदेवयोद्धुंअभ्युपाययौ ॥ यद्वा ॥ तथैवविष्णुवदेववैष्णवीशक्तिरपिदैत्यान्प्रहर्तुंक्षमेतिभावः ॥ वैष्ण
व्याःशक्तेरायुधानिपंच बाहवस्तुचत्वारइतिवैषम्यं ॥आहुरत्र ॥ शंखशार्ङ्गंएकस्मिन्बाहौ ॥ अंगुलिसक्तसूत्रलग्नःशंखोवादनार्थः ॥ शार्ङ्गंतुमुष्टौनिविष्टमि

तथैववैष्णवीशक्तिर्गरुडोपरिसंस्थिता ॥ शंखचक्रगदाशार्ङ्गखड्गहस्ताभ्युपाययौ ॥ १७ ॥ जज्ञेवाराहमतुलंरूपं
याबिभ्रतीहरेः ॥ शक्तिःसाप्याययौतत्रवाराहींबिभ्रतीतनुं ॥ १८ ॥ नारसिंहीनृसिंहस्यबिभ्रतीसदृशंवपुः ॥
प्राप्तातत्रसटाक्षेपक्षिप्तनक्षत्रसंहतिः ॥ १९ ॥ ॥छ॥ ॥छ॥

त्यवैषम्यं ॥ यद्वा ॥ युद्धेवादनार्थःशंखोवादनौचित्याद्वाहुमूलावलम्बीत्यवैषम्यं ॥ शंखोनायुधंतस्यवादनार्थत्वादितिकश्चिदाह॥तत्र ॥ शंखपाणिरित्यत्रपा
णेःसप्तम्यंतस्यपरनिपातत्वाभावप्रसंगात् ॥ अस्तिचशंखस्यसंग्रामेस्वनिस्वनत्रासाकुलशत्रुत्वादायुधत्वौचित्यमित्यलंविस्तरेण ॥१७ ॥ पुनर्वैष्णवशक्त्यं
तरमाविर्बभूवेत्याह ॥ हरेर्भगवतोविष्णोःअतुलबलपराक्रमाभ्यांअनुपमंचवराहस्येदंवाराहंरूपंयाबिभ्रतीसतीभगवतीजज्ञे ॥ जनीप्रादुर्भावेअनुदात्तेत्
कर्तरिलिट् ॥ यद्वा ॥ ज्ञाअवबोधनेकर्मणिलिट् ॥ ऋषिभिः शास्त्रेणजज्ञेआज्ञायि ॥ सापिहरेःशक्तिःनारायणीदेवता ॥ वराहस्येयंवाराहीतांतनुंशरीरव्यक्तिं
बिभ्रतीआययौ ॥ १८ ॥ पुनर्वैष्णवशक्त्यंतरंप्रापदित्याह ॥ सटानांस्कन्धकेसराणांआक्षेपेणकम्पनेनइतस्ततस्ताडनेनक्षिप्ताःप्रेरितादूरीकृतानक्षत्राणां
संहतयःसमूहाययासा ॥ अतएवनृसिंहस्यभगवतःसदृशंवपुःबिभ्रती ॥ अतएवनृसिंहस्येयंनारसिंहीवैष्णवीशक्तिः योद्धुंतत्रप्राप्ता ॥ नाचासौसिंहश्चनृसिं
हः ॥ यद्वा ॥ ग्रामैकदेशेदग्धेग्रामोदग्धइतिवत्नुरेकदेशेनृशब्दः सिंहैकदेशेसिंहशब्दश्चवर्त्तते ॥ ततश्चनाचासिंहश्चनृसिंहस्तौयस्मिन्भगवतोविष्णोरव

तारेनृसिंहः ॥ मत्वर्थेऽर्शआदित्वादच् ॥ १९ ॥ वज्रमायुधंहस्तेयस्याः सा ॥ गजराजोपरिस्थिताऐरावताधिरूढा ॥ सहस्रनयनानियस्याःसा ॥ अतए वयथाशक्रइंद्रःसमवस्थितोभूदाकारादिनातथैवसाप्यैंद्रीशक्तिः इंद्रस्येयमैंद्री ॥ योद्धुंप्राप्ता ॥ यथासादृश्येइत्यसादृश्यइतिप्रतिषेधादव्ययीभावाभावेयथे ति पृथक्पदं ॥ वज्रालंकृतहस्तावा ॥ वज्रोस्त्रीहीरकेपवौ ॥ इंद्रस्यस्त्रीइंद्राणीशक्तिस्त्वैंद्री ॥ तदित्थंत्र ह्मण्याद्यादेवशक्तयः सप्तेहकथिताः ॥ २० ॥ ततोनंतरंताभिर्ब्रह्माण्यादिभिर्देवशक्तिभिःपरिवृतःईशानोमहेशः । चंडिकामाह ॥ किमिति ॥ ममशंभोःप्रीत्यास्नेहनकारणेनअसुराहन्यंतांशीघ्रमिति ॥ केचित्तु ॥ चंडिकेतिपठंतितदापरिवृताईशानेतिचस्त्रीलिंगत्वेनचंडिकाविशेषणेद्वेततश्चायमन्वयः ॥ ततोदेवशक्त्यागमानंतरंताभिर्देवशक्तिभिःपरिवृताई शानाईशानशक्तिसंपन्नाचंडिकाभगवतीदेवशक्तीःप्रत्याह ॥ हेदेवशक्तयःभवतीभिःममचंडिकायाःप्रीत्यास्नेहनकारणेनशीघ्रंअसुराःसर्वेहन्यंतामिति ॥

वज्रहस्तातथैवेंद्रीगजराजोपरिस्थिता॥सहस्रनयनाप्राप्तायथाशक्रस्तथैवसा॥२०॥ ततःपरिवृतस्ताभिरीशानोदे वशक्तिभिः॥हन्यंतामसुराःशीघ्रंममप्रीत्याहचंडिकां ॥२१॥ततोदेवीशरीरात्तुविनिःक्रांतातिभीषणा॥चंडिकाशक्ति रत्युग्राशिवाशतनिनादिनी २२ साचाहधूम्रजटिलमीशानमपराजिता॥दूतत्वंगच्छभगवन्पार्श्वंशुंभनिशुंभयोः २३

॥ २१ ॥ ततोनंतरंदेवीशरीरात्तुचंडिकाशरीरादपिपुनःचंडिकाशक्तिःविनिष्क्रांताप्रादुरभूत् ॥ चंडिकायाःदेव्याःशक्तिःकीदृशी ॥ अतिभीषणाअत्यर्थभय कारिणी ॥ अतिपाशिनीतिपाठेप्रशस्तःपाशोस्त्यस्याःपाशिनीअतिक्रूरापाशिन्यतिपाशिनी ॥ पुनःकीदृशीअत्युग्राऽतिरौद्रा ॥ पुनःकीदृशी ॥ शिवानां शृगालानांशतेनकृतोनिनादःसोस्त्यस्याःशिवाशतनिनादिनी ॥ यद्वा ॥ शिवेत्यनेनपरमैश्वर्यंकथ्यते शक्तिशक्तिमतोरभेदोपचारात् ॥ तस्याविशेषणं ॥ श तत्वसंख्ययानिनदतितच्छीलाशिवाशतनिनादिनी ॥ शतमित्युपलक्षणं ॥ सर्वतःशब्दायमानेत्यर्थः ॥ एतदुक्तंभवति ॥ यस्यदेवस्ययद्रूपमितिवचनाच्चंडि काशक्तिर्विनिर्गताचंडिकाकृतिरेवशिवेतिनाम्नाप्रादुरभूत्इति ॥ यद्वाशिवाशतेनसहनिनदतीति ॥ अन्यथाउत्तरत्रतदागच्छततृप्यंतुमच्छिवाः पिशितेन वइतिशिवागतत्वंकथंस्यात् ॥ २२ ॥ अपराजितापरैःशत्रुभिरजिता ॥ यद्वाअविद्यमानःपरउत्कर्षःशत्रुर्वायस्याःसाअपराजयतिस्मजिताप्राप्तलोकोत्कर्षा ॥ यद्वा ॥ अजःसंजातोयस्याःसाअजितापितामहमाताविष्णुमायेतियावत् ॥ साचंडिकायाःशक्तिर्देवताधूम्रजटिलंईशानंरुद्रंआह ॥ किं हेभगवन् ॥

देवीतलेनकरतलेनतंशुम्भमपिउरसिवक्षस्यताडयत् ॥ अस्त्रीतलमधोदेशेस्वरूपेपृष्ठतस्तलं ॥ वितस्तौचचपेटेचततोऽन्यारक्षणितलं ॥ १६ ॥ सदैत्यरा

नांराजाशुम्भः राजाहःसखिभ्यष्टच् ॥ देवीकृततलप्रहारेणचपेटघातेनअभिहतःवक्षसिताडितःमहीतलेनिपपात ॥ अथसदैत्यराजः सहसावेगेनअ

तर्क्येणबलेनचपुनःतथैवनिपतनात्प्रागिवउत्थितःउदस्थादुच्चैःस्थितिमाप ॥ १७ ॥ महीतलादुत्पत्यउड्डीयदेवींप्रगृह्यगृहीत्वाउच्चैर्गगनमाकाशमा

स्थितःआरूढः ॥ आङ्पूर्वात्तिष्ठतेःसकर्मकाद्गत्यर्थाकर्मकसूत्रेणकर्त्तरिक्तः ॥ आस्थितवान्आङःस्थःप्रतिज्ञानमर्थः गगनंस्थानत्वेनप्रतिज्ञातवान् ॥

तत्रापिगगनेपिसाचंडिकानिराधारानिरधिकरणासत्येवतेनसहयुयुधे ॥ यद्वा ॥ निर्निश्चयनिषेधयोः ॥ निश्चयश्चाबाध्याध्यवसायःनिराधाराअहमेवसर्वश

क्तिसमन्विताशत्रुमुपसंहरिष्यामीतिनिश्चयज्ञानाधारा ॥ यद्वा ॥ चंडिकाशब्दब्रह्मरूपतयाआकाशस्थितयासाधारत्वादनिराधारा ॥ १८ ॥ तदागग

तलप्रहाराभिहतोनिपपातमहीतले ॥ सदैत्यराजःसहसापुनरेवतथोत्थितः ॥ १७ ॥ उत्पत्यचप्रगृह्योच्चैर्देवींगग

नमास्थितः ॥ तत्रापिसानिराधारायुयुधेतेनचंडिका ॥१८॥ नियुद्धंखेतदादैत्यश्चण्डिकाचपरस्परं ॥ चक्रतुःप्रथमं

सिद्धमुनिविस्मयकारकं ॥१९॥ ततोनियुद्धंसुचिरंकृत्वातेनांबिकासह ॥ उत्पात्यभ्रामयामासचिक्षेपधरणीतले ॥२०॥

नारोहणकालेप्रथमंखेआकाशेदैत्यःशुम्भःचंडिकाचदुर्गापरस्परंनियुद्धंबाहुयुद्धंनामप्रधनंचक्रतुःचक्राते ॥ कीदृशंनियुद्धंसिद्धाश्चमुनयश्चसिद्धमुनयः ॥

ननुचद्वंद्वेघिपूर्वंस्यात् नैतत् प्राप्तस्यचबाधास्त्येयेपि ॥ यद्वा ॥ सिद्धैःसहितामुनयःतेशांविश्वावसुप्रभृतीनांमुनीनांनारदादीनांपश्यतांविस्मयस्याश्चर्य

स्यकारकंजनकं ॥ इहकेचित्सिद्धमपनीययुद्धंपेठुः ॥ नियुद्धंनामयुद्धं प्रथमंचक्रतुरित्यर्थः ॥ केचित्तुप्रथममपनीयप्रधनंपेठुः ॥ कर्मव्यतिहारेसर्वना

म्नोद्वेभवतःसमासवच्चबहुलंइतिसुडमौ ॥ परस्यक्रियायांपरःकरोतिपरस्यापिपरःपरस्परम् ॥१९॥ अंबिकादेवीतेनशुम्भेनसहसुचिरंचिरतरंकालंनियुद्धंकृ

त्वाततोनंतरंतंशुम्भंउत्पात्यउत्क्षिप्यचरणंउद्धृत्यभ्रामयामास ततोभ्रामयित्वातंशुम्भंवलयाकारेणोर्ध्वतःभ्रामयित्वाधरणीतलेचिक्षेपपातयामास ॥ इह

भ्रमेणवमंतत्वान्मित्वान्मितांह्रस्वइतिह्रस्वत्वं ॥ भ्रमयामासेतिसभ्यःपाठः ॥ यद्वा ॥ वेत्यनुवर्त्यमितांह्रस्वः साचव्यवस्थितविभाषा ॥ तेनक्वचित्प्रयो

गेपुराणादौसंक्रामयतीतिवद्भ्रामयामासेत्यपिसभ्यएव ॥ इहउत्पाद्यउत्पात्यउत्क्षिप्येतिपाठत्रयं ॥ भ्रमुअनवस्थानेणेस्यादेशः ॥ क्षिपप्रेरणेलिट् ॥ २० ॥

देव्याक्षिप्तःसदुरात्माशुम्भःधरणींप्राप्यवेगितःसंजातवेगःसन् ॥ वेगतइतिपाठे वेगात् ॥ वेगवानितिवापाठः ॥ चण्डिकानिधनेच्छयामुष्टिंउद्यम्यउ त्क्षिप्यउद्यतंकृत्वाभ्यधावत ॥ देवीत्यर्थउच्यते ॥ चण्डिकायाःसकाशात्प्राप्तव्यंयत्निधनंमरणंतत्रेच्छयायतःअभ्यागछत् ॥ अथात्ययेपलाय्यचेद्गच्छे दसौनम्रियेतैवेति ॥ दुष्टआत्मास्वभावोयस्यसः आत्मायत्नोधृतिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच ॥ २१ ॥ सर्वेषांदैत्यानांजनेश्वरंराजानंशुम्भंततोदेवीवक्ष सिउरसिशूलेनभित्त्वाविदार्यजगत्यांभूमौपातयामास । जगतीजगतीच्छन्दोविशेषेपिक्षितावपि ॥ २२ ॥ देव्याःशूलमायुधंतस्याग्रंतेनविक्षतःहतः ॥ क्षिणुक्षणुहिंसायांद्वावपिणांतौतनादी ॥ तेनक्षितःक्षतइतिपाठद्वयं ॥ कर्मणिक्तः ॥ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपोझलिक्ङिति ॥ स शुम्भःगतासुःनिर्गतप्राणःसन्उर्व्यांभूमौपपात ॥ किंकुर्वन्सकलांदेवींपृथ्वींचालयन् ॥ कथंभूतांपृथ्वींअब्धयश्चद्वीपाश्चतैःसहवर्त्तमानां ॥ पुनःकीदृ

सक्षिप्तोधरणींप्राप्यमुष्टिमुद्यम्यवेगितः ॥ अभ्यधावतदुष्टात्माचण्डिकानिधनेच्छया ॥ २१ ॥ तमायांतंततोदेवी सर्वदैत्यजनेश्वरं ॥ जगत्यांपातयामासभित्त्वाशूलेनवक्षसि ॥ २२ ॥ सगतासुःपपातोर्व्यांदेवीशूलाग्रविक्षतः ॥ चालयन्सकलांपृथ्वींसाब्धिद्वीपांसपर्वतां ॥२३॥ततःप्रसन्नमखिलंहतेतस्मिन्दुरात्मनि ॥ जगत्स्वास्थ्यमतीवाप निर्मलंचाभवन्नभः ॥२४॥ उत्पातमेघाःसोल्कायेप्रागासंस्तेशमंययुः ॥सरितोमार्गवाहिन्यस्तथाशुंभेनिपातिते२५

शींसपर्वतांपर्वतैःसहवर्त्तमानां ॥ चालयन्निति ॥ चलकम्पने णिचिकम्पनेचलिर्मित् ॥ वायुश्चलयतिवल्लींईषत्कम्पयति ॥ अन्यत्रनमित्वायुश्चालयति घनश्रेणींदेशांतरंप्रापयतीत्यर्थः ॥ अत्रतुस्थानांतरप्रापणंधात्वर्थः ॥ तेनात्रमित्त्वाभावात्ह्रस्वत्वाभावः ॥ कश्चिदाह ॥ चलनंचालःतंकरोतिणिच्लटः शतृप्रत्ययःप्रयोजकव्यापाराभावाण्णिचोत्रासंभवादितितन्नमृतस्यापिउपचारात्स्वाभाव्याद्वाप्रयोजकव्यापारसंभवात् ॥ मृतःपुत्रोमातरंरोदयतिधनमानं दयतीतिवन्मृताचेतनयोरप्यस्त्येवप्रयोजकव्यापारइतिप्रागुक्तएवमित्त्वभावाभावोपायआश्रतधितव्यः ॥ २३ ॥ देव्यातस्मिन्दुरात्मनिशुम्भेहतेसातिततो हेतुतः अखिलंविश्वंप्रसन्नमभवत् ॥ तथाहि ॥  जगल्लोकःस्वास्थ्यंअनाकुलत्वंअतीवअतितरांआप ॥ नभःआकाशंचनिर्मलंनिःपांशुअभवत् ॥ विश्वम शेषंकृत्स्नंसमस्तनिखिलानिनिःशेषं विष्टपंभुवनंजगत् ॥ २४ ॥ प्राक्शुंभमरणात्पूर्वंसोल्काःउल्कासहिताःयेउत्पातमेघाः देवलोकशुभायचागताःशांति

मगमन्भितिभावः ॥ उल्काज्वाला ॥ यदाहुः ॥ लंकाशेफालिकाटीकाधातकीत्रंचकाढकी ॥ सिध्रकाशारिकाह्रिकाप्राचिक्रोश्रूफापिपीलिकाः ॥ देव्या
शुंभेनिपातितेसतितथाअनाकुलाःसरितःनद्यःमार्गवाहिन्यःमार्गाददूरगाआसन् ॥ पूर्वमाकुलत्वादुत्पथगामिन्यःअधुनातुतद्वैपरीत्यमिताश्चाइतिभावः ॥
॥ २५॥ देव्यातस्मिन्शुम्भेनिहतेसतिततोहेतुतःसर्वदेवगणाःइंद्रादयःहर्षनिर्भरमानसाःनिःशेषेणभरःपोषःपूर्णतायत्रतानिनिर्भराणिहर्षेणनिर्भराणिमानसा
नियेषांते बभूवुः ॥ अथचगंधर्वाःहाहाहूहूप्रभृतयःललितंमनोहरंयथास्यात्तथादेव्याःपराक्रमंजगुःगायंतिस्म ॥ २६ ॥ गीतमुक्त्वावाद्यंनृत्यंचाह॥देवगण
विशेषाःअवादयन्तथान्येएवाप्सरोगणाः ननृतुःनृत्यंतिस्म ॥ वाताःपुण्याःशैत्यमांद्यसौरभ्ययुक्ताःववुःवांतिस्मपुण्याःरजःशून्याश्च ॥ तथादिवाकरःसूर्यः
सुप्रभःसुतेजस्कःअभूत् ॥ २७ ॥ अग्नयःआहवनीयादयःशांताःनिर्मलाःसंतःजज्वलुःज्वलंतिस्म ॥ ज्वलदीप्तौ ॥ लिट्उस् ॥ शुंभेनिहतेयज्ञाःप्रवृत्ताइ

ततोदेवगणाःसर्वेहर्षनिर्भरमानसाः ॥ बभूवुर्निहतेतस्मिन्गंधर्वाललितंजगुः ॥ २६ ॥ अवादयंस्तथैवान्येननृतु
श्चाप्सरोगणाः ॥ ववुःपुण्यास्तथावाताःसुप्रभोभूद्दिवाकरः ॥ २७ ॥ जज्वलुश्चाग्नयःशांताःशांतदिग्जनितस्व
नाः ॥ २८ ॥ इतिमा०देवीमाहात्म्येशुम्भवधःसप्ताशीतितमोध्यायः ॥ ८७ ॥ ॥ ॥ ऋषिरुवाच ॥ देव्याहते
तत्रमहासुरेंद्रेसेंद्राःसुरावह्निपुरोगमास्तां ॥ कात्यायनींतुष्टुवुरिष्टलाभाद्विकाशिवक्त्राब्जविकाशिताशाः ॥ १ ॥

त्यर्थः ॥ दिग्जनितस्वनाउत्पातशब्दाःशांताःउपशांतिमगुः ॥ यद्वा ॥ दैत्यार्दितदेवादिहाहाकारस्वनाःशांताइत्यर्थः ॥ २८ ॥ इतिमार्कंडेयेराजाधिराजतो
मरान्वयश्रीशंतनुविरचितायांदेवीमाहात्म्यटीकायांशुम्भवधेसप्ताशीतितमोध्यायः ॥ ८७ ॥ ॥छ॥ देव्याचण्डिकयातत्रसं
ग्रामेमहासुरेंद्रेशुम्भेहतेसतिसेंद्राइंद्रसहिताःवन्हिपुरोगमाःअग्न्यादयःसुरादेवाइष्टलाभात्शुम्भनिहतलक्षणात्संतुष्टाःअतएवविकाशिवक्त्राःदीप्तवदनाःप्रस
न्नमुखाःसुष्ठुविकाशिताआशादिशोयेषांतेतांशुम्भमर्द्दिनींकात्यायनींचण्डिकांतुष्टुवुः ॥ ष्टुञ्स्तुतौ ॥ विकाशिवक्त्राब्जविकाशिताशाइतिपाठे ॥ काशृदी
प्तौ तालव्यांतः ॥ काशनंकाशःकाशोयेषांतानिकाशीनि विकाशीनिवक्त्राण्येवअब्जानिकमलानियासांताः विकाशिवक्त्राब्जाः काशःसंजातोयासांताःका
शिताःविशेषेणकाशिताश्चआशाश्चविकाशिताशाः ॥ काशितांसाइतिपाठेसुराइष्टलाभाद्विकाशिवक्त्राब्जाःविकाशितांसाश्चभवंति ॥ अंसोभुजशिरःत

तःकर्मधारयः ॥ महांतोसुराःतस्मिंद्रेश्रेष्ठे कतोमहर्षिःतस्यापत्यंस्त्री गर्गादिपाठात्कात्यशब्दाद्गर्गादियञंतात्सर्वत्रलोहितादिकतंतेभ्यइतिष्फः षित्वात् ङीष् ॥ फस्यायनादेशःकात्यायनी ॥१॥ देवाऊचुःदेवींस्तोतुंस्तवोपयोगीनिवाक्यानिउक्तवंतः प्रपन्नाअनन्यशरणाःशरणार्थिनःभक्तिनम्राःतेषांआर्तिपीडांहरतीतिप्रपन्नार्त्तिहरा॥हरतेरनुद्यमानेच्स्त्रियांटाप् ॥ हेप्रपन्नार्त्तिहरेदेवित्वंप्रसीदप्रसन्नाभव ॥ पाघ्रादिनासदेःसीदभावः ॥ हेअखिलस्यजगतःमातःजननित्वंप्रसीद ॥ हेविश्वस्यईश्वरिव्यापिकेत्वंप्रसीद ॥ हेदेवित्वंविश्वंपाहिलक्ष्मीरूपेणसर्वंजगद्रक्ष हेदेवित्वंचराचरस्यजगतःईश्वरीविष्णुमायात्मतयाव्यापिकासि ॥ चराश्चाचराश्चचराचरं ॥ सर्वोद्वंद्वोविभाषैकवद्भवति ॥ अन्यथाचरगतौपचाद्यच् ॥ चरिचलिपतिवदीनामच्याक्चाभ्यासस्येत्यनेनचराचरं जंगमात्मकमेवस्यान्नाजंगममपि॥यदाहुः ॥ चरिष्णुजंगमचरंत्रसमिंगंचराचरं ॥२॥ हेदेवित्वंयतःहेतोःपृथिवीस्वरूपेणस्थितासि ॥ अतःजगतःविश्वस्या

॥ देवाऊचुः ॥ ॥ देविप्रपन्नार्तिहरेप्रसीदप्रसीदमातर्जगतोखिलस्य ॥प्रसीदविश्वेश्वरिपाहिविश्वंत्वमीश्वरीदेवि चराचरस्य॥२॥ आधारभूताजगतस्त्वमेकामहीस्वरूपेणयतःस्थितासि ॥ अपांस्वरूपस्थितयात्वयैतदाप्याय्यते कृत्स्नमलंघ्यवीर्ये ॥३॥ त्वंवैष्णवीशक्तिरनंतवीर्याविश्वस्यबीजंपरमासिमाया ॥ संमोहितंदेविसमस्तमेतत्त्वंवैप्रसन्नाभुविमुक्तिहेतुः ॥ ४ ॥

धारभूतात्वं एकैवनान्या ॥ हेअलंघ्यवीर्येलंघितुमशक्यबले ॥ अपांस्वरूपस्थितयात्वयैवएकयाएतत्कृत्स्नंजगदाप्यायतेसर्वमाप्यायते ॥ प्यायीवृद्धौ णिच्कर्मणिलट् ॥ अपांजलानांस्वरूपेणस्थितयात्वया ॥ ३ ॥ हेदेवित्वंअनंतवीर्याअक्षयबला ॥ वैष्णवीविष्णुसंबंधिनीशक्तिरसियथाशक्त्याविष्णुर्भगवानशेषलोकानूपालयतिसाविष्णुसामर्थ्यलक्षणात्वमेवेतिभावः ॥ विश्वस्यबीजंकारणंयल्लोकवेदप्रसिद्धंसापरमाव्यापिनीमहामायात्वमेवासि ॥ परमाउत्कृष्टादुत्तराशक्तिर्नत्वदन्यासेतिभावः ॥ हेदेवित्वयामाययाएतत्समस्तंविश्वंसंजातमोहंकृतंमोहितंममतायत्तंकृतं ॥ देवित्वंवैप्रसिद्धाज्ञानवैराग्यरूपाउपनिषत्परमात्मतत्त्वावगमस्वभावाप्रसन्नासतीभवनंभूःपुनःपुनरुद्भवःभुविरुत्पत्तिभूतप्रादुर्भावइतियावत् ॥ भूसत्तायांस्त्रियामिक्कृष्यादिभ्यइतिइक्प्रत्ययः ॥ उवङादेशः ॥ भुवेरुत्पत्तितोमोचनंमुक्तिःमुक्तेहेतुःकारणमसीत्यर्थः ॥ भुविभूमौइत्युक्तेर्थपुष्टच्यभावस्तिष्ठतुब्रह्मलोकादौमुक्तिहेतुतानस्यादित्यव्याप्तिपरिजिहीर्षार्थोपलक्षणताश्रयेणजनितप्रतिपत्तिगौरवादौर्गुण्या ॥ भुविमुक्तिहेतुरित्येकंपदं ॥ ४ ॥ ॥७॥

हेदेविसमस्ताःश्रुत्यादयोविद्याःतथैवभेदाःत्वत्प्रकाराएवत्वदंशाएव ॥ तस्मात्तवविद्यानांपरस्परंपार्थक्याभावाचेकास्तुतिःप्रवर्ततां ॥ नकापि॥कीदृशीस्तु
तिः॥ स्तवमर्हतिस्तव्यं ॥ दंडादिभ्योयः ॥ अन्यथाअचोयतंबाधित्वाएतिस्तुसूत्रेणक्यपिसतिस्तुत्यंइत्येवस्यात् ॥ स्तव्येस्तोत्रार्हैवस्तुनिविषयेपराचापरा
चेतिपृथग्भूतोक्तिर्यस्यांसास्तव्यपरापरोक्तिः॥ स्तुतिस्तुत्ययोःपृथक्त्वेखलुस्तुतिःप्रवर्तते एकत्वेकातेस्तुतिरस्त्विवतिभावः॥तर्हित्वंब्राह्मीत्वंलक्ष्मीरित्यादिस्तु
तिरपिदेव्याएकत्वेननघटतइत्याह ॥समस्ताःसकलाःकलासहिताःचतुःषष्टिकलोपेताःपातिव्रत्यादिधर्मोपेताःसृष्ट्यादिप्रतिनियतनैपुण्योपेताश्चब्रह्माण्या
द्याःस्त्रियश्चतवैवांशाइतिकातेस्तुतिःएकस्वरूपत्वात् ॥ हेदेवित्वयाएकयैवअंबयामात्राएतज्जगत्पूरितंपूर्णंआप्यायितं ॥ त्वमेवजगत्जगदेवत्वमितिकाते
स्तुतिःनकापि ॥ अन्यदीयगुणानामन्यत्रारोपणवर्णनंस्तुतिः ॥ अत्रतुसैवविद्येतिसैवब्राह्म्यादिस्त्रीतिभेदाभावात्स्तव्यपरापरोक्तिःपरमोक्तिरित्यर्थः ॥ देवी
न्यूनानभवतीतिस्वभावतःश्रेष्ठोक्तिरित्येवतस्यामितिकातेस्तुतिरित्युक्तं ॥ न्यूनमधिकीकृत्योक्तिःस्तुतिरित्यविलक्षणं ॥ न्यूनाभवतियतःततोधिका नैवेत्यु

**विद्याःसमस्तास्तवदेविभेदाःस्त्रियःसमस्ताःसकलंजगच्च ॥ त्वयैकयापूरितमंबयैतत्कातेस्तुतिस्तव्यपरापरोक्तिः**
**॥ ५ ॥ सर्वभूतायदादेवीभुक्तिमुक्तिप्रदायिनी ॥ त्वंस्तुतास्तुतयेकावाभवंतिपरमोक्तयः ॥ ६ ॥ ॥७॥**

क्तंकातेस्तुतिरिति ॥ ५ ॥ पुनरपिदेव्यांस्तुतिर्नघटतइत्याह ॥ परमोक्तिःस्तुतिरितिस्तुतिलक्षणं ॥ तत्रदेवीसर्वभूताइतीदंस्तुतिपदं ॥ एवंचसतिब्रूमः हेदे
विभुक्तिमुक्तिप्रदायिनीत्वंयदासर्वभूतासिसर्वात्मासिविश्वरूपासिइतिस्तुताभूः ॥ तदास्तुतयेस्तुत्यैस्तुत्यर्थाः कावानामपरमाःश्रेष्ठाःउक्तयःवर्णनास्तुतयः
भवंतिनकापिपरमाश्रेष्ठाउक्तिःवर्णनेस्तुतिरितिलक्षणंततश्चयच्चकिंचित्पदार्थरूपंभावाभावात्मकंसंभवेत्तन्नामसर्वमित्युच्यते ॥ सर्वभूतादेवीतियदास्तुता
तदासर्वस्यचदेव्याश्चैक्यात्किंस्तुत्यंकावास्तुतिःस्यादितिभवत्यर्थादाह ॥ कावाभवंतिपरमोक्तयइति॥ काःपरमोक्तयःयाभिस्तूयेतदेवी॥नकापि ॥ युक्तेस्या
दावृतेभूतंप्राण्यतीतेसमेत्रिषु ॥ सर्वभूतासर्वेण।विश्वेनसमेत्यर्थः ॥ कीदृशीदेवी ॥ अयदाशुभावहविधिदा ॥ भुज्यतेभोगःस्वर्गादिःमुक्तिर्मोक्षःतौप्रददाति
भुक्तिमुक्तिप्रदा॥यद्वा॥भुक्तेर्मुक्तिर्वैराग्यंतांप्रददाति प्रेदाज्ञःकःअयतेगच्छतिप्राप्नोत्ययती। कृत्यल्युटोबहुलमितिकर्त्तरिल्युट्॥यद्वा॥दयदानेभुक्तिमुक्तीप्रदयते
भुक्तिमुक्तिप्रदायिनी ॥ णिनिः॥यद्वा॥प्रापूरणेभुक्तिमुक्तीप्रातिपूरयतिभुक्तिमुक्तिप्रा ॥ आतोनुपसर्गेकः॥ दयिष्यतेरक्षिष्यतिदायिनी ।भविष्यदाधर्मण्ययोर्णि

निः ॥ भुक्तिमुक्तिप्रचासौदायिनीरक्षित्रीचेतिकर्मधारयःपुंवद्भावः ॥ भुक्तिमुक्तिप्रदायिनी ॥ ६ ॥ हेदेविसर्वस्यजनस्यजंतोःहृदिचेतसि ॥ बुद्धिरूपेणसंस्थिते ॥ हेस्वर्गापवर्गदेदेविनारायणिनमोस्तुते ॥ हेदेविसंस्थितेसम्यगवस्थिते॥ संस्थाधारेस्थितौमृतौ॥स्वर्गंचापवर्गंचददातिस्वर्गापवर्गदा ॥ आतोनुपसर्गेकः ॥ नरःकश्चिदृषिःनरस्यापत्यंनारायणः ॥ नडादिभ्यःफक्फस्यायनः ॥ नारायणस्यस्त्रीस्त्रीमायोपचारात् ॥ नारायणीविष्णुमायेत्यर्थः ॥ यद्वा ॥ आपोनाराइतिप्रोक्ताः ॥ नारमम्मयमयनमस्यनारायणः॥ संज्ञायांणत्वं ॥ यद्वा ॥ नराणांसमूहोनारमयनमस्यनारायणःतस्यस्त्रीनारायणीलक्ष्मीः ॥ हेनारायणि ॥ कात्यायनींतुष्टुवुरितिकात्यायनीस्तुतौप्रकृतायांनारायणीनमस्कृतिःस्त्रियःसमस्ताःतदंशाएवेतिप्रागुक्तेःकार्यभेदमात्रत्वेपिवस्तुतस्तयोरैक्यादविरुद्धा ॥७ ॥ अष्टादशनिमेषास्तुकाष्ठात्रिंशत्तुताःकलाइत्यभिधानात् काष्ठाकलातोन्यूनेतिकाष्ठाकलादिरूपेणेतिपाठःसभ्यः विश्वस्यखलुकाष्ठाकलान्यूनेतिकाष्ठाकला ॥ क्षणमुहूर्त्ताहोरात्रपक्षमासर्त्वयनसंवत्सरादिकालरूपेणपरिणामप्रदायिनी ॥ बाल्यादिवयोवस्थाविशेषेणवातथाविश्वस्यउपरतौअवसानेविषयेयाश

सर्वस्यबुद्धिरूपेणजनस्यहृदिसंस्थिते ॥ स्वर्गापवर्गदेदेविनारायणिनमोस्तुते ॥ ७॥ कलाकाष्ठादिरूपेणपरिणामप्रदायिनि ॥ विश्वस्योपरतौशक्तेनारायणिनमोस्तुते ॥ ८ ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ ९ ॥ ॥छ॥ ॥छ॥ ॥छ॥

क्तिःतत्संबुद्धौहेशक्तेरुद्ररूपत्वात्हेसमर्थे॥ नारायणीतिअयगतौइण्गतौइगतौअय्यतेइयतेवाअयनःपरमात्माकर्मणिल्युट् पुंल्लिंगतानुप्रयोगतः लिंगमशिष्यंलोकाश्रयत्वाल्लिंगस्येतिवचनात् ॥ नाराणामयनःनारायणः ॥ पूर्वपदात्संज्ञायामगःइतिणत्वं ॥ नारायणस्यपरमात्मनइयंमायानारायणी ॥ अन्यथानारायणस्येयंनारायणीयेतिवृद्धाच्छःस्यात् ॥ तस्मात्संबंधेऽणेव ॥ परिणामःप्राणिकायावयवोपचयलक्षणावृद्धिः ॥ तांप्रददातिपरिणामप्रदायिनी ॥ सुप्यजातौणिनिः ॥ आतोयुक्चिण्कृतोः ॥ ज्ञापकसिद्धमनित्यंइतिक्वचित्सोपसर्गादपिणिनिः ॥ दुग्धंदधिरूपेणपरिणमतेइत्यादौतुपरिणामोरूपांतरावाप्तिर्दुग्धादिस्वरूपाद्विवर्त्तः॥परिणामप्रदायिनीतिपाठे ॥ परितोमानंयत्नापरिच्छेदः॥प्राणिकायादेःकालकृताशरीरावस्थायौवनादिवयः॥ तस्यपरिच्छेदःपरिमाणंएतावत्कालपरिमितमिदंबाल्यमिदंयौवनमित्यादितत्प्रददातिहेपरिणामप्रदायिनि ॥ ८ ॥ सर्वाणिमंगलानियतःस्युःसासर्वमंगला ॥ मंगलेभ्योहिता ॥१९५॥

॥ ९ ॥ सर्वाणिमंगलानियतःस्युःसासर्वमंगला ॥ मंगलेभ्योहिता

मंगल्या ॥ उगवादिभ्योयत् ॥ सर्वमंगलाचासौमंगल्याच ॥ सर्वमंगलमांगल्येइतिवृद्धिपाठपक्षेतु ॥ मंगिगती मंगतेमंगलानिमंगलेभ्योहितामंगलमाम गल्यैवमांगल्या ॥ अन्येषामपिदृश्यतइतिदीर्घःपूरुषवत् ॥ कश्चित्त्वाह ॥ गुणवचनब्राह्मणादिभ्यःकर्मणिचेतिकर्मणिष्यञिति ॥ तत्र ॥ तस्यार्थसंग त्यभावस्तावदास्तां स्त्रियांटापंबाधित्वाषित्वात्ङीषिमांगलीत्येवस्यात्तत्तुमांगल्येतिरूपसिद्धिरितितदुपेक्षणीयंप्रेक्षावद्भिः ॥ शिवाभवानीरुद्राणी ॥ हे शिवे॥यद्वा ॥ शिवामंगलोपेतेतिरमापिशिवाभवति॥ हेशिवेहेरमेसर्वेषामर्थानांसाधयित्रीउमारमाच॥ हेसर्वार्थसाधिके॥ अर्थोभिधेयरैवस्तुप्रयोजननिवृ त्तिषु ॥ शरणंगृहरक्षित्रोः॥ शरणेषुसाधुःशरण्या तत्रसाधुरितियत् ॥ हेशरण्ये ॥ सोमसूर्याग्निरूपाणि त्रीण्यंबकानिनेत्राण्यस्याःत्र्यंबका यद्वा त्रयों बकाः ॥ उमारमाच ॥ हेत्र्यंबके ॥ त्रयाणांलोकानामंबकःपितेत्यागमः ॥ गौरीउमा ॥ यद्वा ॥ गुङ्अव्यक्तेशब्दे ॥ गूयतेअव्यक्तंगुंतंशब्दायतेमनसागृ ह्यतेधार्यतेगौरीउमारमाच ॥ ऋज्रेंद्राग्रवज्रादिसूत्रेणरनिप्रत्ययेगुङोवृद्धिर्निपात्यते ॥ गौरोरुणेसितेपीते ॥ गौरादित्वात्ङीप् ॥ अयःशुभावहोविधिर्य

सृष्टिस्थितिविनाशानांशक्तिभूतेसनातनि ॥ गुणाश्रयेगुणमयेनारायणिनमोस्तुते ॥ १० ॥

त्रपरमात्मनिसः अयनःपामादित्वान्मन्वर्थीयोनः ॥ नृनये नयोनीतिः ॥ भावेऋदोरप् ॥ नरणंनरःनरेणनयेनअयनःनरायणःपरमात्मा तस्येयंमायानाराय णी ॥ हेनारायणिनमस्तेस्तु नमःस्वस्तीतिचतुर्थी ॥ १ ॥ जगतांसृष्टेःसर्गस्यस्थितेर्वर्त्तनस्यनाशनस्यप्रलयस्य ॥ हेशक्तिभूतेशक्तिरित्येवंभूताजाता ॥ हेश क्तिरूपे ॥यद्वा॥ब्राह्मीशक्तिःसृष्टौ ॥ वैष्णवीशक्तिःस्थितौ ॥ रौद्रीशक्तिर्विनाशे तद्भूतात्रिशक्तिभूतायाशक्तिःतत्सामान्येनशक्तिभूता हेशक्तिभूते ॥ यद्वा ॥ श क्तीनांभुवापरमात्मनाउतासंगता ॥ वेञ्तंतुसंताने ॥ यद्वा ॥ शक्तीनांभूरिअवताररूपाशक्तिभूतिः ॥ हेशक्तिभूते ॥ यद्वा॥ शक्तीनांभुवःभूमयःब्रह्मादयःते षांऊतिःसंघटना ॥ तंतुनेवगुंफनंसंतननंशक्तिभूतिः ॥ वेञःस्त्रियांक्तिन् ॥ हेसनातनि ॥ सायंचिरमित्यादिसूत्रेणल्युस्तुट्च स्त्रियांटित्वात्ङीप् ॥ हेशाश्व ति ॥ हेगुणाश्रये ॥ गुणाःसत्त्वादयःआश्रयोयस्याःसा ॥ यद्वा ॥ गुणानांआश्रयोयत्रसागुणाश्रया ॥ यद्वा ॥ सत्त्वादिगुणयुक्तागुणाःयथायोगंब्रह्मादयः तेआश्रयायस्याःसा ॥ हेगुणमये ॥ मयगतौ ॥ मयतेगच्छतिलोकान्मया ॥ पचाद्यचिस्त्रियांटाप् ॥ गुणैर्मयागुणमया ॥ गुणैर्गतिमतीत्यर्थः ॥ यद्वा ॥ हेऽगुणमये ॥ अगुणंब्रह्ममयते ॥ अगुणेनब्रह्मणामयागमनपराअगुणमया ॥ ब्रह्मतत्त्वेनमयमानेत्यर्थः ॥ गुणमयीतिपाठे ॥ गुणानांविकारःगुणमयी ॥

यद्वाऽगुणमयी ॥ मयड्वैतयोर्भाषायामित्यादिनामयट् ॥ ङीप् ॥ यद्वा ॥ गुणेभ्योहेतुभ्यआगतागुणमयी॥हेतुमनुष्येभ्यइत्यधिकृत्यमयड्वेति ॥ यद्वा ॥ गु
णाःप्राकृताउच्यंतेस्यांगुणमयी ॥ तत्प्रकृतवचनेमयट् ॥ अय्यतेईयतेगम्यतेअयनामुक्तिः ऋशव्दः अदितिवाची ॥ उरपत्यानिआराःदेवाः ॥ नशव्दो
नञ्समानार्थोननुबंधकः ॥ नसंत्यबाप्यारादेवाःसाधकत्वेनयत्रसानारा नाराचासौअयनीचेतिनारायणीमुक्तिर्देवैरबापिदुःप्राप्येत्यर्थः॥तत्संबुद्धौ ॥हेनारा
यणि ॥ १० ॥ शरणंरक्षितारंआगताःरक्षरक्षेतिप्रपन्नाःशरणागताः तएवदीनाआर्त्ताश्चदुःखितालोकाःतेषामापद्भ्योदुःखेभ्यःपरित्राणंतदेवपरंमुख्यंउद्दे
श्यमयनंवर्त्मयस्याःसातत्संबुद्धिः ॥ सर्वलोकस्यार्त्तिहरे ॥ हरतेरनुद्यमनेच् ॥ हेदुःखनाशनि ॥ हेदेविभगवति ॥ न आरायणिनमःअःस्तुतेइतिच्छेदः ॥पूर्वं
अग्रेअः ॥ एङःपदांतादतीत्यकारलोपः ॥ प्रथमैकवचनस्यऋकारस्यश्रवणमेवतथाचसतिमो(ः)इतिभवति ॥ अग्रेचस्तुते ॥ ऋइतिदेवमाता ॥
मःशिवः अःविष्णुः द्वौप्रतिषेधौप्रकृतमप्रतिषिद्धमर्थंगमयतः॥ उर्देवमातुरपत्यानिआराःऋभवःदेवाः॥ अय्यतेईयते(वा)अयनीआराणांअयनीआरायननी

**शरणागतदीनार्त्तपरित्राणपरायणे ॥ सर्वस्यार्तिहरेदेविनारायणिनमोस्तुते ॥ ११ ॥ हंसयुक्तविमानस्थेब्रह्माणी**
**रूपधारिणि ॥ कौशांभःक्षरिकेदेविनारायणिनमोस्तुते ॥ १२ ॥**

याध्यातव्यादेवता॥आरायणी ॥ पूर्वपदात्संज्ञायामगइति
णत्वं हेआरायणि ॥ त्वां मःशिवःअश्चविष्णुःननस्तुतेअपितुस्तुतेनौत्येव ॥ ष्टुञ्स्तुतौल्डात्मनेपदं ॥ ११॥ हंसैर्युक्तंविमानंतत्रतिष्ठतिहेहंसयुक्तविमानस्थे
॥ यद्वा ॥ हंसैःयतिविशेषैःसूर्यैःरूपैश्चयुक्तमाश्रितंविमानंविगताहंकारंपरब्रह्मतत्रतिष्ठति ॥ हंसःश्वेतगरुत्सूर्ययतिप्राणात्मसुस्मृतः ॥ हेब्रह्माणीरूपधारि
णि ॥ कुशोदर्भःतस्येदंकौशं कौशंचतदम्भश्चकौशांभः ॥ क्षरसंचलने ॥ क्षरणंक्षरः ॥ घञिसंज्ञापूर्वकोविधिरनित्यइत्यतउपधावृद्ध्यभावः घञर्थेकविधानं
वा ॥ कौशांभसःक्षरःसेचनंतंकरोति इतिणिच्चिण्वुल् ॥ वोरकः स्त्रियांटाप् प्रत्ययस्थात्कात्पूर्वस्यातइदाप्यसुपइतिइत्वं ॥ हेकौशांभःक्षरिके ॥ श
त्रुषुकुशोदकक्षेपणंकुर्वित्यर्थः ॥ यदुक्तं ॥ कमंडलुजलाक्षेपेइत्यादि ॥ यद्वा ॥ क्षरंकरोतिक्षरयतिक्षरिकाआसेक्त्रीकौशांभसःक्षरिका ॥ अणिजंतस्येतिभा
वः ॥ क्षरतेस्तुण्वुलिक्षारिका ॥ यद्वा ॥ कौशांभःक्षरतिसिंचातिकौशांभःक्षरी ॥ कर्मण्यण् ॥ ङीप् ॥ स्वार्थेकः ॥ केणइतिह्रस्वः ॥ यद्वा ॥ कुश ॥१९६॥
संबंधीअंभसःक्षरःआयुधत्वेनयस्याःसाकौशांभःक्षरिका ॥ शेषाद्विभाषाकप् ॥ अत्रपक्षेअप् ॥ सुपःपरइत्वंनभवति ॥ ना अ आ ऋ आ अयनि



नमा उः स्तुत इतिच्छेदः ॥ नापुरुषः ॥ अकारोवासुदेवः स्यादाकारस्तुपितामहः ॥ ऋइतिदेवमाता ॥ ऋभशब्दप्रयोगदर्शनात ॥ आइतिआकार

नमा उः स्तुत इतिच्छेदः ॥ नापुरुषः ॥ अकारोवासुदेवः स्यादाकारस्तुपितामाहः ॥ ऋइतिदेवमाता ॥ ऋभुशब्दप्रयोगदर्शनात् ॥ आङ्इतिआङ्
पसर्गः ॥ आयनिइतिसंबुद्ध्यंतं ॥ न मा इतिद्वौप्रतिषेधौ ॥ उकारस्तुमहेश्वरः॥स्तुतेइतिष्टुञ्स्तुतौआत्मनेपदं ॥ अयगतौ ॥ कृत्यल्युटोबहुलंइतिकर्म
णिल्युट् ॥ आसमंताद्यतेईयतेवाआयनीउपासनी इष्टदेवता ॥ उःदेवमातुः आयनी ॥ इकोयणचि ॥ रायनी ॥ पूर्वपदात्संज्ञायामगइतिणत्वं ॥
हेरायणि ॥ हेदेवमातुरदितेरभीष्टदैवते त्वं ॥ आश्वब्रह्माअःविष्णुःउःरुद्रःइतित्रिमूर्तिलक्षणः नापुरुषः ॥ मा न स्तुते नस्तुतेइतिमा अपितुस्तौत्ये
व ॥१२॥ धृञ्धारणेभ्वादिः ॥ धरतीतिधरा पचाद्यच् ॥ त्रिशूलचंद्राहीनांधरा ॥ अन्यथाकर्मण्यण्यात्स्यात् ॥ त्रिशूलादिधरतीतिविग्रहश्रवणात् ॥ त्रिशू
लमायुधं चंद्रोत्रैककलात्मकःकिरीटभूषणौचित्यात् ॥ अहयःफणिनः ॥ इंद्वेधि ॥ बहुष्वनियमः ॥ हेत्रिशूलचंद्राहिधरे ॥ महान्वृषभःतेनवाहिनीवाहवती॥
ऋन्नेभ्योङीप् ॥ यद्वा ॥ महावृषभेणवाहयतीस्वंमहावृषभवाहिनी ॥ बहुव्रीहौमहावृषभवाहनेतिस्यात् ॥ हेमहावृषभवाहिनि ॥ महेश्वरस्येयंशक्तिर्माहे

**त्रिशूलचन्द्राहिधरेमहावृषभवाहिनि ॥ माहेश्वरीस्वरूपेणनारायणिनमोस्तुते ॥ १३ ॥ मयूरकुक्कुटवृतेमहाशक्ति**
**धरेनघे ॥ कौमारीरूपसंस्थानेनारायणिनमोस्तुते ॥१४॥** श्वरी ॥ तस्याःस्वरूपमाकारःतेनध्येयतयासंभाविते ॥ अनधातुःप्राणना

र्थः ॥ अननंअनिःइक्कृष्यादिभ्यःस्त्रियां ॥ कृदिकारादक्तिनइतिङीष् ॥ अनी । इःकामः एःकामस्यतद्दैवतबीजस्यवाअनीप्राणरूपा यनी ॥ अंविष्णुं
रातिरक्षकत्वेनगृह्णातिअरा त्रिलोकी ॥ अरायाःयनीअरायणी ॥ हेअरायणि ॥ त्वांउःशिवः नापुरुषः। न मा स्तुतेअपितुस्तौति ॥ १३ ॥ हेअनघेकौ
मारीरूपसंस्थाने ॥ अतएवहेमहाशक्तिधरे ॥ अतएवमयूरकुक्कुटवृतेनमोस्तुते ॥नारायणस्यभगवतोविश्वरूपस्येयंआकृतिः नारायणीमूर्तिः ॥ छांदसत्वाद्व
ह्वाच्छमनाश्रित्यसामान्यतोऽणेव ॥ यद्वा ॥नराणामयनंनरायणंधर्मार्थकाममोक्षलक्षणंतस्येयंसाद्विधातत्रजातातत्साधयितुंच ॥ शैषिकोण् ॥नारायणी॥
नविद्यतेअघंयतःहेअनघे ॥ यद्वा ॥ नविद्यतेअःविष्णुःपूज्योयेषांतेअनादैत्याःतान्हंतीत्यनघा ॥ सप्तम्यांजनेर्डः ॥ अन्येष्वपिदृश्यतेइत्यत्रापिशब्दःसर्वोपा
धिव्यभिचारार्थःतेनधात्वंतरादपिकारकांतरेपिडोभवति ॥ डित्यभस्यापिटेर्लोपः ॥ पृषोदरादित्वात् हस्यघः ॥ सांस्थितिः सम्यगवस्थानंसंनिवेशः
संस्थानं। कुमारस्य शक्तिधरस्येयं शक्तिर्देवताकौमारी : कौमार्याःसकाशाद्रूपसंस्थानं यस्याःसा ॥ यद्वा ॥ कौमारीषण्मुखी रूपसंस्थानशरीरावयवसंनि
वेशविशेषो यस्याःसा॥तत्संबुद्धौ॥महतीशक्तिरायुधंमहाशक्तिःतस्यधरामहाशक्तिधरा ॥ अन्यथातुविग्रहेकर्मण्यण्स्यात् ॥ यद्वा ॥ महाशक्तिरितिसाम

मा०पु० ॥१९७॥ र्थ्यं ॥ मीञ्‌हिंसायांञ्याादेःमीनात्यहीन्मयूरः ॥ मीनातेरूरन् ॥ कुक्कुटश्चरणायुधः ॥ कुगुच्चारणेनकुटतिकुक्कुटः ॥ कुटकौटिल्ये ॥ पचाद्यच् ॥ मयूरावा स०स० अ० ८८
हनीभूताःक्रीडार्थाश्च॥कुक्कुटाश्चयुद्धचातुर्यदिदृक्षौचित्योपार्जिताः॥तैर्वृतावेष्टितायतइयंकौमारीतेनबाल्योचिताकुक्कुटक्रीडोक्ता॥यद्वा॥मयूरैःकुक्कुटैश्चवृति
रावरणंयस्याःसा॥यद्वा ॥ क्रौंचवाराहचक्रादिव्यूहवत्मयूरकुक्कुटव्यूहौचसंग्रामोचितसैन्यसंनिवेशौज्ञेयौ ॥यदाहुःव्यूहस्तुबलविन्यासोभेदादंडादयोयुधि ॥
दंडोमंगलभागौचाप्युत्सन्नश्चाबलोदढः॥ व्यूहस्तेषांविशेषाःस्युश्चक्रव्यूहादयोपिचेति॥ततश्चमयूरव्यूहकुक्कुटव्यूहाभ्यांवृता ॥ यद्वा ॥ वाहनीभूतत्वान्मयूरैः
कौमारीवृता ॥ अथचेयंकुक्कुटाख्यालंकारोपेतत्वात्कुक्कुटवृता॥यदाहुः । कुकुटस्ताम्रचूडेचभूषायामपिदृश्यते ॥ यद्वा॥ मयूराःकुक्कुटाइवचित्रपुच्छवर्जिता
मयूरकुक्कुटाःतैर्वृते॥यदभ्यधुः ॥ आरक्तनेत्रापिच्छाग्रोमयूरःकुक्कुटःस्मृतः ॥ बर्हिणवर्जितोबर्हीयःसमयूरकुक्कुटइतियादवप्रकाशः ॥ कुमारोमयूरमारोहति

शंखचक्रगदाशार्ङ्गगृहीतपरमायुधे ॥ प्रसीदवैष्णवीरूपेनारायणिनमोस्तुते ॥ १५ ॥ गृहीतोग्रमहाचक्रेदंष्ट्रोद्धृत
वसुंधरे ॥ वराहरूपिणिशिवेनारायणिनमोस्तुते ॥ १६ ॥नृसिंहरूपेणोग्रेणहंतुंदैत्यान्कृतोद्यमे ॥ त्रैलोक्यत्राणस
हितेनारायणिनमोस्तुते ॥ १७ ॥ ॥छ॥ ॥छ॥ ॥छ॥

कौमारीतुमयूरीं॥यद्वा॥मालक्ष्मीः । आःपितामहः । इःकामः । उःशिवः । उत्राताररक्षकोविष्णुःरोऽग्निःतैर्वृतामयूरवृता ॥ अथचसाकुक्कुटवृता॥कुकवृक
आदाने ॥ भ्वादिरात्मनेपदी ॥ ततःकर्त्तरिक्विप् ॥ कोकंतेकौमार्याःआज्ञामाददतेदैत्यैःसहसंग्रामयितुंकुंकि देवसैन्यानि तान्येवकुटंविदैत्यैःसहविरुद्ध
बुद्धीनिकुटानिचकुक्कुटानिदेवसैन्यानिचतैर्वृता ॥१४॥ हेवैष्णवीरूपे हेशंखादिगृहीतपरमायुधे ॥ हेदेवि प्रसीद ॥ हेनारायणिनमस्तेस्तु ॥ शंखश्चचक्रंच
गदाचशार्ङ्गंचसेनांगत्वादेकवद्भावः॥तानिगृहीतानि परमाण्यायुधानियया सा ॥ विष्णोरियंशक्तिर्वैष्णवीतस्याइवरूपंयस्याःतत्संबुद्धिः ॥ १५ ॥ गृहीतंउग्रं
रौद्रंचमहच्चक्रंययातत्संबुद्धिः ॥ दंष्ट्रयाउधृतावसुंधराभूमिर्ययातत्संबुद्धिः ॥ वराहस्यभगवतोविष्णोःरूपंतद्वतीवराहरूपिणी ॥ वराहसदृशरूपमात्मानं
दर्शयंतीत्यर्थः ॥ यद्वा ॥ सत्यापपाशसूत्रेण रूपाद्दर्शने ॥ णिच्॥वराहमेवात्मनोरूपंपश्यतिवराहरूपिणीतत्संबुद्धिः ॥ हेशिवेसर्वमंगलेनारायणि॥दर्शंति ॥१९७॥
ययादंष्ट्रा ॥ दाम्नीशसेत्यादिनादशतेःकरणेष्ट्रन् ॥ [illegible] ॥ १६ ॥ उग्रेणनृसिंहरूपेणदैत्यान्हंतुंहेकृतोद्यमे ॥ त्रैलोक्यस्य



त्राणेनरक्षणेनमहितेपूजिते ॥ त्रैलोक्यत्राणसहितेइतिवापाठः ॥ अयगती ॥ अय्यतेइत्ययनंचतुर्भद्रंनराणामयनंप्रा...

त्राणेनरक्षणेनमहितेपूजिते ॥ त्रैलोक्यत्राणसहितेइतिवापाठः ॥ अयगतौ ॥ अय्यतेइत्ययनंचतुर्भद्रंनराणामयनंप्राप्तव्यंनरायणंतस्यप्रापयित्रीनारायि
णी ॥ चतुर्णांभद्राणांसमाहारश्चतुर्भद्रं ॥ आद्युश्चत्वारिभद्राणिबलंधर्मःसुखंधनं ॥ १७ ॥ किरीटंमुकुटंतद्वतीहेकिरीटिनि ॥ महद्वज्रमायुधंयस्याःसामहा
वज्रामहाहीरा तत्संबुद्धिः ॥ सहस्रंनयनानिसमाहृतानिसहस्रनयनं ॥ पात्रादित्वात्ङीपूनभवति ॥ तेनउज्ज्वलतिप्रकाशतेसहस्रनयनोज्ज्वला ॥ य
द्वा ॥ सहस्रनयनेज्वलेइतिपाठः ॥ सहस्रंनयनानियस्याःसासहस्रनयना ज्वलितिज्वला ॥ पचाद्यच् ॥ हेज्वले ॥ अनुपसर्गादिवज्वलितिकसंतेभ्योणस्तु
वा ॥ तेनमुक्तेसोपसर्गादनुपसर्गाच्चज्वलतेःपचाद्यच्भवत्येव ॥ वृत्रोनामदैत्यःकश्चितस्यप्राणान्हरति हेवृत्रप्राणहरे ॥ चकारःउक्तमनुक्तंचसमु
च्चिनोति ॥ इंद्रस्येयंऐंद्रीहेऐंद्रि ॥ १८ ॥ चंडिकाशरीरोत्थाशिवदूतीतस्याःस्वरूपेणहतादैत्याययाहेहतदैत्येमहद्बलंसामर्थ्यंसैन्यंचयस्याःहेमहाबले ॥ य

किरीटिनिमहावज्रेसहस्रनयनोज्ज्वले ॥ वृत्रप्राणहरेचैंद्रिनारायणिनमोस्तुते ॥ १८ ॥ शिवदूतीस्वरूपेणहतदै
त्येमहाबले ॥ घोररूपेमहारावेनारायणिनमोस्तुते ॥ १९ ॥ दंष्ट्राकरालवदनेशिरोमालाविभूषणे ॥ चामुंडेमुंडमथ
नेनारायणिनमोस्तुते ॥ २० ॥ लक्ष्मिलज्जेमहाविद्येश्रद्धेपुष्टेस्वधेध्रुवे ॥ महारात्रेमहामायेनारायणिनमोस्तुते ॥ २१ ॥

द्वा ॥ महान्बलिरूपहारःपूजोपकरणंयस्याःमहाबलिःहेमहाबले ॥ करोपकारयोःपुंसिबलिःप्राण्यंगजेस्त्रियां ॥ घोरंभयानकंरूपंयस्याःहेघोररूपे ॥ महा
नारावःशब्दोयस्याःशृगालपरिवारत्वात्हेमहारावे ॥ १९ ॥ दंष्ट्राभिःकरालंभयंकरंवदनंयस्याःहेदंष्ट्राकरालवदने ॥ करालोदंतुरेतुंगे ॥ शिरसांमालाविभू
षणंयस्याःहेशिरोमालाविभूषणे ॥ मुंडंदैत्यंमथ्नातिमुंडमथना ॥ मथविलोडने नंद्यादित्वात्ल्युः ॥ यद्वा ॥ कर्त्तरिबहुलंल्युट् ॥ बाहुलकात्ङीषभावः ॥
हेमुंडमथने ॥ हेचामुंडेकालि ॥ २० ॥ हेलक्ष्मि हेलज्जे हेमहाविद्येमहतिविद्ये परमात्मगोचरज्ञानरूपे ॥ यद्वा ॥ महाविद्येहेमहत्यविद्येपरमात्मे
तरप्रपंचगोचरनानाज्ञानरूपे ॥ हेश्रद्धेआस्तिक्यबुद्धिस्वभावे ॥ हेपुष्टेशरीरावयवोपचयरूपे ॥ हेस्वधेपितृतृप्तिस्वरूपे ॥ हेध्रुवेशाश्वतिब्रह्मरूपे ॥ हे
महारात्रेहिरण्यगर्भावसानकालरूपे ॥ यद्वा ॥ महारात्रे हेअनन्यतमोधिकरणकालरूपे ॥ यद्वा ॥ महारात्रिःसर्वप्राणिमोहकरीदेव्येवोच्यते ॥ अ
तएवहेमहामायेसर्वजगत्कारणभूते ॥ यद्वा ॥ हेमहत्यमाये ॥ हेमहारात्रिइतिपाठेरात्रेश्चाजसाविति संज्ञायांङीप् छन्दस्येव ॥ तिमिरपटलैरवगुंठितारा

न्यइतितुजसंतःप्रयोगः बह्वादीकृदिकारादक्तिनोवाङीष्वक्तव्यः ॥ उणादावदेस्त्रिन् अत्रिर्मुनिः बाहुलकात् रातेरपित्रिन् ॥ रात्रिःरात्रीच ॥ रातिसुखंरात्रिः ॥ २१ ॥ हेनारायणि हेमेधेनमोस्तुते ॥ धीर्धारणावतीमेधा ॥ अण्यतेकथ्यतेअणिःमेधादिः॥इकृष्यादिभ्यःकृदिकारादक्तिनोवाङीष् ॥ अणीमेधादिः ॥ ईइत्यस्याःलक्ष्म्या अणीमेधादिःयणी नराणांसमूहोनारंनारेणासमंतात्श्रितायणीनारायणी ॥ हेवरेश्रेष्ठे ॥ हेभूतेअतीते ॥ यद्वा ॥ भूतिर्भस्मनिसम्पदि ॥ भूतिर्जन्मच ॥ हेसम्पद्रूपे ॥ ऐश्वर्यादिरूपे ॥ हेबाभ्रवि बिभर्त्तिबभ्रुर्विष्णुःतस्येयंभगिनीवैष्णवी हेबाभ्रवि ॥ विपुलेनकुलेविष्णौबभ्रुर्नाकपिलेत्रिषु ॥ हेतामसितमोगुणसम्बंधिनि जगत्संहारकर्त्रिनियतायत्हिनियते ॥ यद्वा ॥ दैवंदिष्टंभागधेयंभाग्यंस्त्रीनियतिर्विधिः ॥ हेईशेस्वामिनि ॥ ईष्टेईशा पचाद्यच् ॥ २२ ॥ अंतोनाशेस्वरूपेचनिश्चयेऽवयवेऽवधौ ॥ समीपेवसितेबंधेयमेमृत्यावेनहासि ॥ सर्वतःसर्वत्रपाणिपादंअंतोवयवोयस्याःहेसर्व

मेधेसरस्वतिवरेभूतिबाभ्रवितामसि ॥ नियतेत्वंप्रसीदेशेनारायणिनमोस्तुते ॥२२ ॥ सर्वतःपाणिपादांतेसर्वतोक्षिशिरोमुखे ॥ सर्वतःश्रवणघ्राणेनारायणिनमोस्तुते ॥२३ ॥ सर्वस्वरूपेसर्वेशेसर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहिनोदेविदुर्गेदेविनमोस्तुते ॥ २४ ॥ एतत्तेवदनंसौम्यंलोचनत्रयभूषितं ॥ पातुनःसर्वभीतिभ्यःकात्यायनिनमोस्तुते ॥ २५

तःपाणिपादांते ॥ पाणयश्चपादाश्चपाणिपादं ॥ प्राण्यंगत्वादेकवद्भावः ॥ पादांत्रेइतिपाठेसर्वतःपाणयश्चपादाश्चअंत्राणिचपुरीतत्संज्ञानिप्राणसूत्राणियस्याः सातथोक्ताअयंतेयंतेयंतिवाअनयाज्ञानविशेषंइतिअयनीपाणिपादाद्युपचितिः ॥ नराणामयनीनरायणीनरायण्याइयमधिदेवतानारायणी ॥ सर्वतोक्षीणिचशिरांसिचमुखानिचयस्याःसा हेतथोक्ते ॥ २३ ॥ सर्वंजगत्त्रयंस्वरूपंयस्याःसाहेसर्वस्वरूपे ॥ यद्वा ॥ सर्वस्वंरूपंयस्याःसा ॥ हेसर्वस्यईशेसर्वेशे ॥ सर्वाःशक्तयःसामर्थ्यलक्षणाब्रह्मादिलक्षणाश्चताभिःसमन्विताहेसर्वशक्तिसमन्विते ॥ हेदेवित्वंभयेभ्यःनःदेवान्त्राहिछांदसंपरस्मैपदं ॥ यथा ॥ त्रायतेत्राःक्विपिरूपं॥ ताइवाचरत्राहिरक्षिकेवाचर॥सर्वप्रातिपदिकेभ्यःक्विब्वाचारेवा॥त्राहीत्यव्ययंवा॥हेदुर्गेदेविनमस्तेतुभ्यमस्तु भिन्नवाक्यस्थत्वाद्देवीतिपदद्वयंपौनरुक्त्येननदुष्यति ॥ २४ ॥ हेदेविएतत्प्रत्यक्षासिद्धंतेतववदनंसौम्यंसुंदरंलोचनत्रयेणसोमसूर्याग्निमयेनालंकृतंनःअस्मान्सर्वभीतिभ्यःसमस्तभयेभ्यः ॥ यद्वा ॥ सर्वाभियोयाभ्यःताःसर्वभियः सर्वभियश्चताः ईश्वर्यश्चताभ्यः पातुरक्षतु ॥ हेकात्यायनिनमस्तेतुभ्यमस्तु ॥ इतितोप्योषध्यभावादन्नाभा





वाद्यज्ञाभागाभावाद्यज्ञभागभुजांभयाभावःप्रार्थनीयः ॥ कतःकश्चिदपितस्यापर्यंस्त्रीतिगर्गादियत्तात्

वाधज्ञाभागाभावाधज्ञभागभुजांभयाभावःप्रार्थनीयः ॥ कतःकश्चिद्दषिःतस्यापत्यंस्त्रीतिगर्गादियञंतात्यञश्चत्राचांष्फतंद्धितद्वयस्यविक्लत्सर्वत्रगोत्राद्दितादि
कतंतेभ्यइतिस्त्रियांष्फःफस्यायनादेशःषित्वात्ङीष्कात्यायनी ॥ यद्वा ॥ कश्चब्रह्माअश्चविष्णुःतौअततःसततंयथाक्रमंगच्छतःइतिकात्यौसरस्वतीचरमा
च कर्मण्यण् ॥ अण्णंतात्ङीप् ॥ वाणीरमयोरासमंतादयनीपरमागतिःकात्यायनी ॥ सौम्यंस्यात्सुंदरेसोमदेवताकेबुधेग्रहे ॥२५॥ भद्राचसाकालीचहेभ
द्रकालि ॥ ज्वालाभिःकरालंतुंगंअत्युग्रंअतिरौद्रंअशेषाणामसुराणांसूदनंहिंसकं ॥ तेतंवत्रिशूलंनोस्मान्भीतेर्भयात्पातुनमस्तेतुभ्यमस्तु ॥ षूदलक्षणेहिं
सायांअनुदात्तेत्सूदतेसूदनंनंद्यादित्वाल्ल्युः ॥ अन्यथाऽनुदात्तेतश्चहलादेरितिप्राप्तस्ययुचःसूददीपदीक्षश्चेतिप्रतिषेधात्सूदकंइतिस्यात् ॥ २६ ॥ यातावकी
घंटास्वनेननादेनजगदापूर्यपूरयित्वादैत्यतेजांसिहिनस्तिसानोस्मान्पापेभ्यःदैत्येभ्यश्चपातु॥कंकेभ्यःकमिव ॥ जगत्कर्तृलोकः अनोभ्यःसुतानिव ॥ अत्र

ज्वालाकरालमत्युग्रमशेषासुरसूदनं ॥ त्रिशूलंपातुनोभीतेर्भद्रकालिनमोस्तुते ॥ २६ ॥ हिनस्तिदैत्यतेजांसिस्वने
नापूर्ययाजगत् ॥ साघंटापातुनादेवीपापेभ्योनःसुतानिव ॥ २७ ॥ असुरासृग्वसापंकचर्चितस्तेकरोज्ज्वलः ॥
शुभायखड्गोभवतुचंडिकेत्वांनतावयम् ॥२८॥ रोगानशेषानपहंसितुष्टादादासिकामान्सकलानभीष्टान् ॥ त्वामा
श्रितानांनविपन्नराणांत्वामाश्रिताह्याश्रयतांप्रयांति ॥ २९॥ ॥छ॥ ॥छ॥

छांदसत्वेनअनस्शब्दात्पंचम्याभ्यम् तस्यसुपांसुलुगित्यादिनालुक् ॥ यथालोकःशकटेभ्यःसुतान्पातितथा ॥ यद्वा ॥ जनन्यांशकटेप्यनः ॥ जनके
शकटेप्यनः ॥ यथाअनःमातापिताचपापेभ्यःविघ्नेभ्यःपाति ॥ २७ ॥ हेचण्डिकेअसुराणांअसृक्रुधिरंवसामेदःतद्रूपःपंक.तेनचर्चितःव्याप्तःतेतवकरेह
स्तेउज्ज्वलः ॥ यद्वा ॥ करैःकिरणैःउज्ज्वलःखड्गःनोस्माकंजगतांवाशुभायभवतु ॥ हेदेवित्वांवयंनताःप्रणतामहे ॥ बलिहस्तांशवःकराः ॥ २८ ॥ नॄनये ॥
नृणांतिन्यायेन व्यवहरंतीति नराः ॥हेदेवित्वदाराधनेनतुष्टासतीत्वामाश्रितानांनराणांअशेषान्रोगानपहंसितेषांचकाम्यकामान्कामानर्थान्ददासि ॥ रज
कस्यवस्त्रंददातीतिवत्संप्रदानाभावात्षष्ठ्येव ॥ हेदेवित्वामाश्रितानांनराणांनविपत्आपन्नाविद्यते॥हिहेतावधारणे ॥ त्वामाश्रितानराःआश्रयतांआश्रीय
माणतांप्रयांतिआश्रीयंते आश्रयाःकर्मण्येरच् ॥ अन्यैराश्रीयमाणतांसेव्यमानतांभजंतीत्यर्थः ॥ राजत्वंदेवत्वंवाप्नुवंतीतिभावः ॥ २९ ॥ ॥छ॥

मा०पु० हेअंबिकेदेविअथेदानींत्वयाआत्मतनुंनिजतनुंबहुधाबहुप्रकारैःअनेकैःब्रह्माण्यादिशक्तिरूपैःकृत्वाधर्मद्विषांयज्ञादिकमंद्रोहिणांमहासुराणांशुंभादीनांयत्क स०स०
॥१९९॥ दनंविशसनंकृतंतदेवतदन्यास्त्रीत्वत्तोपराकादेवताप्रकरोतिकाकर्तुंशक्तास्ति नकापि त्वमेकाकर्तुंशक्तासिनान्येतिभावः॥ धर्मोत्रवैदिकः ॥ परमर्षिसूत्रं॥ अ अ०
थातोधर्मजिज्ञासा॥चोदनालक्षणोर्थोधर्मइति ॥ ३० ॥ हेदेविविवेकाःयुक्तायुक्तविचाराःदीपाइवमहातमःपटलपाटनपटवःतेषु ॥ विद्यासुचतुर्दशसुदी ८८
पायमानासुअन्वीक्षिक्यादिषु ॥ यद्वा ॥ विद्यासुज्ञानप्रदमंत्ररूपासु॥ शास्त्रेषुमनुस्मृत्यादिषुतथाद्येषुवाक्येषुवैदिकेषुपुराणेषुविद्यमानेषु ॥ अनादरेसप्तमी
तान्यनादृत्यतज्जन्यविवेकमपनीय ॥ अतिमहांधकारेममत्वगर्त्तेएतद्विश्वंअतीवविभ्रामयसि ॥ सात्वदन्याका ॥ त्वमेवविष्णुमायाविश्वंमोहयसिममत्वे
योजयासि नान्या॥ विभ्रामयसीत्यनित्येमितान्हस्वः॥ यद्वा ॥ हेदेविआद्येषुवाक्येषुशास्त्रेषुशोभनेषुआर्थेषुशास्त्रेषुयावित्त्संविद्दुषीवा ॥ त्वद्देवीतः।

एतत्कृतंयत्कदनंत्वयाद्यधर्मद्विषांदेविमहासुराणां ॥ रूपैरनेकैर्बहुधात्ममूर्त्तिंकृत्वांबिकेतत्प्रकरोतिकान्या॥ ३० ॥
विद्यासुशास्त्रेषुविवेकदीपेष्वाद्येषुवाक्येषुचकात्वदन्या ॥ ममत्वगर्त्तेतिमहांधकारेविभ्रामयस्येतदतीवविश्वम् ॥
॥ ३१ ॥ रक्षांसियत्रोग्रविषाश्चनागायत्रारयोदस्युबलानियत्र ॥ दावानलोयत्रतथाब्धिमध्येतत्रस्थितात्वंपरिपा
सिविश्वम् ॥ ३२ ॥ विश्वेश्वरीत्वंपरिपासिविश्वंविश्वात्मिकाधारयसीतिविश्वम् ॥ विश्वेशवंद्याभवतीभवंतिविश्वा
श्रयायेत्वयिभक्तिनम्राः ॥ ३३ ॥

अन्याकानकापि ॥ त्वमेवविन्नान्येतिभावः ॥ अथचहेदेविएत
द्विश्वंकर्मअतिमहांधकारेतमोगुणरूपे॥ ममेत्यव्ययं ॥ ममत्वंगर्त्तइव॥तस्मिन्ममत्वगर्त्तेमोहकूपेअतीवविभ्रामयसिव्यालोडयासि॥ यासात्वदन्यानास्ति॥
विभ्रामयतीतिअन्यशब्दस्यशेषत्वात्प्रथमपुरुषःत्वदन्यःकोभुंक्तेमदन्यःकोभुंक्तेमदन्योन्योभुंक्तेत्वदन्योन्योभुंक्तेइतिवत्॥३१॥ हेदेवित्वंतत्रचतत्रस्थितास
तीविश्वंपरिपासि ॥ दचकचेति ॥ यत्रचरक्षांसिदैत्याःउग्रविषाःनागाःतक्षकयःयत्रचअरहयःशत्रवःयत्रचदस्युबलानिचौरसमूहाः॥यत्रचदावानलःतथायत्र
चाब्धिमध्यंतत्रसर्वत्रउपद्रवप्रसंगेस्मृतासतीपतितान्रक्षसीत्यर्थः॥ दवदावौवनारण्यवह्नी॥३२॥ हेदेवित्वंविश्वेश्वरिइतियदतःत्वंविश्वंपरिपासि॥यद्वा॥ वि
श्वेश्वरीविश्वव्यापिनीअसि अतःविश्वंपरितोरक्षसि ॥ यद्वा ॥ हेविश्वेश्वरिइतिपाठः ॥ हेदेवित्वंविश्वात्मिकासिइतिहेतोःविश्वंधारयसि॥ भवतीविश्वस्यईशः ॥१९९॥



लष्टारक्षितासंहर्ताचब्रह्मादिःतस्यवंद्याअभिवादनीयास्तुत्याचवर्त्तते ॥ हेदेवित्वत्तुल्ययित्वयिविषयेभक्तिनम्राःस्तुतिमिश्वस्याश्रयाआधारभूताःजगतोयत

स्रष्टारक्षितासंहर्त्ताचब्रह्मादिःतस्यवंद्याअभिवादनीयास्तुत्याचवर्त्तते ॥ हेदेवित्वतूत्वयित्वयिविषयेभक्तिनम्राःस्युःतेविश्वस्याश्रयाआधारभूताःजगतोधार
यितारोभवंतीत्यर्थः ॥३३॥ हेदेवित्वंनोस्माकंप्रसीद ॥ यथैवाधुनाइदानींशुंभाद्यसुरवधाद्धेतोःपर्यलीलःतथैवाग्रेपिसंभावितयाअरिभीतेःनित्यंपरिपालय
हेदेवित्वंसर्वजगतांपापानिप्रशमंक्षयंआशुक्षिप्रंनय ॥ नयतिर्द्विकर्मकः ॥ अथचलोकानां ॥ अत्रह्यधर्मउत्पातशब्देनविवक्षितः ॥ नाशहेतुत्वात्तस्यपाकः
परिणामःतेनजनितानुपसर्गानुपद्रवान्वधपातादीनाशुप्रशांतिंप्रापयेतिवयंदेवाःत्वदेकशरणाःप्रार्थयामहेततःप्रसीदेत्यर्थः ॥ आशुउत्पातेत्यत्रसंधिराविव
क्षितः ॥ आशुह्युत्पातेतिवापाठः ॥ ३४ ॥ विश्वस्यार्तिंहरतिहेविश्वार्त्तिहारिणित्वंप्रणतानांभक्तिनम्राणांप्रसीद ॥ त्रयोलोकाःत्रैलोक्यंचातुर्वर्ण्यादित्वा

देविप्रसीदपरिपालयनोरिभीतेर्नित्यंयथासुरवधादधुनैवसद्यः ॥ पापानिसर्वजगतांप्रशमंनयाशुउत्पातपाकजनि
तांश्चमहोपसर्गान् ॥ ३४ ॥ प्रणतानांप्रसीदत्वंदेविविश्वार्त्तिहारिणि ॥ त्रैलोक्यवासिनामीड्येलोकानांवरदाभव॥
॥ ३५॥ ॥देव्युवाच॥ ॥ वरदाहंसुरगणाःवरंयंमनसेच्छथ॥ तंवृणुध्वंप्रयच्छामिजगतामुपकारकम् ॥३६॥
॥देवाऊचुः॥ ॥ सर्वबाधाप्रशमनंत्रैलोक्यस्याखिलेश्वरि ॥ एवमेतत्त्वयाकार्यमस्मद्वैरिविनाशनम् ॥ ३७॥
॥देव्युवाच॥ ॥ वैवस्वतेंतरेप्राप्तेअष्टाविंशतिमेयुगे॥ शुंभोनिशुंभश्चैवान्यावुत्पत्स्येतेमहासुरौ ॥ ३८ ॥

त्स्वार्थेष्यञ् ॥ तत्रवसंतियेतेषांतैर्वाहेईड्येस्तुत्ये॥कृत्यानांकर्त्तरिवाषष्ठी ॥ लोकानांवरदाऽभीष्टदाभव ॥ ३५॥ हेसुरगणाः अहंयुष्माकंवरदास्मिप्रीतास्मि
यंवरंमनसाइच्छथ ॥ तंजगतांउपकारकंवरंवृणुध्वंअहंप्रयच्छामि ॥ दाणोयच्छः ॥ वृञ्वरणेआत्मनेपदंध्वं ॥ सवाभ्यांवामौ ॥ स्वादिभ्यश्नुः ॥ वृ
णीध्वंइतिपाठेक्र्यादिः लोटोध्वं ॥ ईहल्यघोःप्वादीनांह्रस्वः ॥ यंतं इतिपुंसि ॥ देवाद्वृतेवरंश्रेष्ठेत्रिषुक्लीबंमनाक्प्रिये ॥ वृणुध्वंप्रार्थयध्वमित्यर्थः॥३६॥
हेअखिलस्यविश्वेश्वरिव्यापिकेहेत्रैलोक्यस्वामिनित्वयात्रैलोक्यस्यसर्वबाधाप्रशमनंसर्वदुःखोपशमः ॥ सर्वाबाधेतिपाठे ॥ आङभिव्याप्तौ ॥ आसमंताद्बा
धाआबाधा ॥ अस्माकंवैरिणःदैत्याःतेषांविनाशनंएवंविधंजगदुपकारकंकार्यंकर्त्तव्यंइतिवरप्रार्थनं ॥ यद्वा ॥ हेदेविअखिलेश्वरि ॥ त्वयात्रैलोक्यस्यउपका
रकंकर्मएतत्कार्यंकर्त्तव्यं ॥ कीदृशंतत् ॥ सर्वबाधानांप्रशमनंअस्मद्वैरिणांविनाशनं ॥ ३७ ॥ हेदेवाःशृणुतपूर्वंजगदुपकृत्यैएतेपराक्रमामयाकृताः॥अतः

परंएष्यतोपिमत्कर्त्तव्यान्जगदुपकारान्भवतामपितोषायकथयामि ॥ वैवस्वतमन्वन्तरेभविष्यत्यष्टाविंशतिमेयुगेप्राप्तेसतिशुम्भनिशुम्भश्चान्यावेवनत्वि दानींनिहतौयौ ॥ ततोन्यावेवशुम्भनिशुम्भनामानौदैत्यौउत्पत्स्येतेउद्भविष्यतः ॥ अष्टभिरधिकाविंशतिःअष्टाविंशतिःव्यष्टनःसंख्यायामित्यात्वंअष्टावि शतेर्युगानांकृतादीनांपूरणंयद्युगंविष्णोरष्टमावतारोपलक्षितंतदष्टाविंशतितमं तस्यपूरणेडडितिडट् प्रत्ययस्यविंशत्यादिभ्यस्तमडन्यतरस्यांइतितमडागमः॥ तत्रपृषोदरादित्वात्तशब्दलोपः ॥ यत्तुकश्चिदाह॥माङ्मानेस्त्रियांभावेसम्पदादित्वात्क्विप् ॥ मानंमा अष्टाविंशतिमानंमायस्ययुगस्येतिवाष्टाविंशतेरिवमानं यस्ययुगस्येतिवाविगृह्यबहुव्रीहौनपुंसकेह्रस्वत्वेअष्टाविंशतिमंयुगंततःसप्तम्येकवचनेअष्टाविंशतिमेइति ॥ तावन्मानेःक्विपिघुमास्थादिनाइत्वप्रसंगेदु र्निवारस्तिष्ठतुयुगमन्यपदार्थाः ॥ कथंस्यात्यावतायुगानांअष्टाविंशतिः तत्परिमितापियुगरूपाअष्टाविंशतिसंख्याकाएवान्यपदार्थाइतिअष्टाविंशति तममेवयुगंद्वापरंतद्रूपंकलियुगादिरूपंनसेत्स्यतीति ॥ यथापंचसुपांडवेषुपंचमःसहदेवःतत्रमागमःपंचमाःमानंयस्यसइत्युक्तेपंचानांपूरणःसहदेवोन्य

नंदगोपकुलेजातायशोदागर्भसंभवा ॥ ततस्तौनाशयिष्यामिविंध्याचलनिवासिनी ॥ ३९ ॥ पुनरप्यतिरौद्रेणरू पेणपृथिवीतले॥ अवतीर्यहनिष्यामिवैप्रचित्तांस्तुदानवान् ॥ ४० ॥ भक्षयंत्याश्चतानुग्रान्वैप्रचित्तान्महासुरान्॥ रक्तादंताभविष्यंतिदाडिमीकुसुमोपमाः ॥ ४१ ॥ ॥छ॥ ॥छ॥

पदार्थत्वेननगृह्यते । किंतुपंचापितेमिलिताःपञ्चत्वसंख्यापरिमिताःइतिपञ्चपरिमिताःपञ्चमाइतियुधिष्ठिरादयःपञ्चाप्यन्येपदार्थतयागृह्यंते ॥ नतुसह देवएवतस्मात्प्रागुक्तएवअषाविंशतिमेवाव्युत्पत्तिः ॥ पृषोदरादित्वेनसैवसभ्याअष्टाविंशतिमेयुगेद्वापारांतेकलियुगादौप्राप्ते ॥ यानाद्यंगेयुगःपुंसियुगंयुग्मे कृतादिषु॥ ३८ ॥ ततोहंनंदगोपस्यकुलेगृहे ॥ कुलंवंशेगृहेपितत्॥ जाताउत्पन्ना ॥ यशोदायानंदगोपस्त्रियाःगर्भात्संभवोजन्मयस्याःसा ॥ विंध्याचल निवासिनीसतीतौशुंभनिशुम्भाख्यावसुरौनाशयिष्यामि ॥ ३९ ॥ अहंपुनरपिवैवस्वतमन्वंतरएवाष्टाविंशतिमेयुगेद्वापरेतीतेकलौयुगेप्राप्तेविरुद्धाप्रजासु चित्तिर्ज्ञानंयस्य विप्रचित्तिर्नामकश्चिद्दानवःतस्यापत्यानिवैप्रचित्ताःतानतिरौद्रेणरूपेणपृथ्वीतलेअवतीर्यप्रादुर्भावंउपेत्यहनिष्यामि ॥ तुस्याक्रंदेचधारणे॥ ॥ ४० ॥ तान्वैप्रचित्तान्महासुरानउग्रान् [...] ममदंताःरक्ताआरक्ताएवभविष्यंतिअतएवदाडिमीपुष्पवदरुणवर्णाःभविष्यंति ॥ ४१ ॥





ततोहेतोःमांस्तवंत्यःदेवताःस्वर्गेसततंशश्वतरक्तदंतिकासंज्ञयाव्याहरिष्यंतिकथयिष्यंति ॥ देवाएवदेवताः ॥

ततोहेतोःमांस्तुवंत्यःदेवताःस्वर्गेसततंशश्वत्रक्तदंतिकासंज्ञयाभ्याहरिष्यंतिकथयिष्यंति ॥ देवाएवदेवताः ॥ स्वार्थेतल् ॥ तथामानवाश्चमर्त्यलोकेभुविमां
सततंस्तुवंतःरक्ताःदंतायस्यासारक्तदंतिकातांस्तोष्यंति ॥ ४२ ॥ भूयश्चपुनरपिशतंवर्षाणिपरिमाणंयस्याःशतवार्षिकी ॥ तदस्यपरिणाममितिवुञ् ॥
तद्धितार्थेसमासः ॥ वर्षस्याभविष्यतीत्युत्तरपदवृद्धिः ॥ वर्षाल्लुक्केतिपाक्षिकोलुक् ॥ स्त्रियां ङीप् ॥ तस्यांअनावृष्टौसत्यांअनंभसिनदीतडागादावपिजल
शून्यायांभूमौमुनिभिःसंस्तुता ॥ अयोनिजासम्भविष्यामिस्वयमेवाविर्भविष्यामि ॥ नआसमन्ताद्वृष्टिरनावृष्टि ॥ यद्वा ॥ नास्त्येवासमंताद्वृष्टिर्यस्यांईतौ
साऽनावृष्टिःतस्यां॥संस्तुतासंस्मृतेतिपाठद्वयं ॥ ४३ ॥ ततःप्रादुर्भावानंतरंनेत्राणांशतेनस्तोतॄन्मुनीन्निरीक्षिष्यामीतियत्ततोहेतोर्मांमनुजाःशतमक्षी
णियस्याःशताक्षीतांइतीत्थमन्वर्थसंज्ञयाकीर्त्तयिष्यंति ॥ ईक्षदर्शनेअनुदात्तेत्छांदसंपरस्मैपदं ॥ निरीक्षिष्येयतोमुनीनितिवापाठः ॥ ४४ ॥ हेसुराःततः

ततोमांदेवताःस्वर्गेमर्त्यलोकेचमानवाः ॥ स्तुवंतोऽभ्याहरिष्यंतिसततंरक्तदंतिकाम् ॥४२॥ भूयश्चशतवार्षिक्याम
नावृष्ट्यामनंभसि ॥ मुनिभिःसंस्तुताभूमौसंभविष्याम्ययोनिजा ॥४३॥ततःशतेननेत्राणांनिरीक्षिष्यामियन्मुनी
न् ॥ कीर्त्तयिष्यंतिमनुजाःशताक्षीमितिमांततः ॥४४॥ ततोहमखिलंलोकमात्मदेहसमुद्भवैः ॥ भरिष्यामिसुराः
शाकैरावृष्टेःप्राणधारकैः॥४५॥शाकंभरीतिविख्यातिंतदायास्याम्यहंभुवि ॥ तत्रैवचवधिष्यामिदुर्गमाख्यंमहासुरं ४६

शताक्षीतिसंकीर्त्तनादनंतरंअहंआत्मदेहसमुद्भवैःममशरीरादुत्पद्यमानैः शाकैःप्राणधारकैःहरितकैःपत्राद्यैःसाधनैःआवृष्टेःआभविष्यंतींवृष्टिमवधिंकृत्वा
यावद्वृष्टिर्भवतितावंतंकालंअखिलंसमस्तंलोकंभरिष्यामिपोषयिष्यामिडुभृञ्धारणपोषणयोःऋद्धनोस्येइतीडागमः । अस्त्रीशाकंहरितकं ॥ शाकाख्यंपत्रपु
ष्पादि॥यदाहुः ॥ पत्रमूलकरीराग्रफलकांडास्थिरूढकाः ॥ त्वक्पुष्पंकवकंचेतिशाकंदशविधंस्मृतं ॥४५॥ तदाभुविशाकंभरीतिविख्यातिंसंज्ञांचयास्यामि
प्राप्स्यामि ॥ तत्रैवतदैवचदुर्गमाख्यंमहासुरंदुर्गमंनाममहांतमसुरंवधिष्यामि ॥ जनिवध्योश्चेतिनिर्देशाद्वधिः प्रकृत्यंतरमस्तीतिविज्ञेयं ॥ वधहिंसायांभ्वा
दिःपरस्मैपदी ॥ हनिष्यामीतिवापाठः ॥ शाकमितिमांतमव्ययंचास्ति बिभर्त्तिइतिभरिःसर्वधातुभ्यइः । कृदिकारादक्तिनोवाङीष्वक्तव्यःसुप्सुपेतिसमा
सः ॥शाकंभरिः ॥ यद्वा ॥ फलेग्रहिरात्मंभरिश्चेतिचकारोनुक्तसमुच्चयार्थः ॥ तेनलोकभरणार्थंस्वशरीरोद्भवानिशाकानिबिभर्त्तिशाकंभरिः ॥ इप्रत्ययः ।

उपपदस्यनुमागमश्च ॥ पाठान्याख्याश्चधातूनांदृश्यंतेस्वैरिणः क्वचित् ॥ तस्माद्दुर्गासुरवधाद्धेतोःविख्यातंप्रसिद्धंमेदुर्गादेवीतिविख्यातंनामधेयंभविष्यति॥
दुर्गासुरोहंतव्यत्वेनयस्याःसादुर्गा ॥ अर्शआदित्वान्मत्वर्थीयोऽच्स्त्रियांटाप् ॥४६॥ हेदेवाःपुनश्चयदाहिमाचलेभीमंघोरंरूपंकृत्वारक्षोभ्यःत्रस्तानांमुनीनां
त्राणकारणाद्धेतोःरक्षांसिराक्षसान्भक्षयिष्यामि ॥ क्षययिष्यामिपाठेक्षयंप्रापयिष्यामीतिप्रातिपदिकाद्धात्वर्थेबहुलमिष्ठवच्चेतिणिच् अथवाक्षयप्रेरणेचुरा
दिःप्रेरयिष्यामीत्यर्थः॥४७॥तदामांदेवींआनम्रमूर्त्तयःभक्तिप्रह्वकायाःसंतःसर्वेपिमुनयःवसिष्ठादयःस्तोष्यंति॥ तत्ततःभीमरूपेणरक्षोभक्षणाद्धेतुतःविख्या
तंप्रसिद्धंभीमादेवीतिविश्रुतंनामभविष्यति ॥ बिभ्यत्यस्मादितिभीमंभीमादयोपादानेनिपातिताः ॥४८॥ हेदेवाःयदात्रैलोक्येअरुणोनाममहासुरःमहाबा
धांमहतींपीडांकरिष्यति ॥ लोकान्बाधिष्यतेअतितरांतदाअहंअसंख्येयषट्पदंभ्रामररूपंभ्रमरसंबंधिनींमूर्त्तिंकृत्वात्रैलोक्यस्यहितार्थायअरुणंमहासुरंवधि

पुनश्चाहंयदाभीमंरूपंकृत्वाहिमाचले ॥ रक्षांसिभक्षयिष्यामिमुनीनांत्राणकारणात् ॥ ४७ ॥ तदामांमुनयः सर्वे
स्तोष्यंत्यानम्रमूर्त्तयः ॥ भीमादेवीतिविख्यातंतन्मेनामभविष्यति ॥ ४८ ॥ यदारुणाख्यस्त्रैलोक्येमहाबाधांक
रिष्यति॥ तदाहंभ्रामररूपंकृत्वासंख्येयषट्पदं॥ ४९ ॥ त्रैलोक्यस्यहितार्थायवधिष्यामिमहासुरं ॥ भ्रामरीति
चमांलोकास्तदास्तोष्यंतिसर्वतः ॥ ५० ॥ इत्थंयदायदाबाधादानवोत्थाभविष्यति ॥ तदातदावतीर्याहंकरिष्या
म्यरिसंक्षयं ॥ ५१ ॥ ॥ इतिमार्कंडेयपु०सा०दे० नारायणीस्तुतिर्नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

ष्यामितदालोकाःसर्वत्रमांभ्रामरीत्येवस्तोष्यंतिभ्रमरस्येयंआकृत्याभ्राभरीदेवी॥असंख्येयाःसंख्यातुमशक्याःषट्पदाःभ्रमरमूर्त्तिर्भूत्वाअरुणासुरंहनिष्यति
ततःसाभ्रामरीतिनाम्नालोकैःसंकीर्त्तयिष्यतेसर्वत्रेत्यर्थः ॥ अरुणस्यापत्यंपुमानारुणइतिच्छेदअतइञंबाधित्वाशिवादित्वादण्वा ॥ ४९ ॥ ५० ॥ इदानीं
देव्यावताराणांतत्कार्याणांचानंत्यात्साकल्येनवक्तुमशक्यत्वात्संक्षिप्यतत्कथामुपसंहरति ॥ हेदेवाःइत्थमुक्तानुसारेणप्रकारेणयदायदादानवेभ्यउत्तिष्ठतिउ
त्थास्यतिबाधादानवोत्थादानवेभ्यःसमुद्भवाबाधापीडालोकानांभविष्यतिउत्पत्स्यते ॥ तदातदाअहंतत्तत्कार्यानुरूपमवतीर्यप्रादुर्भावमवाप्यअरिसंक्षयंशत्रु
विनाशंकरिष्यामि॥ दानवोत्थेतिसुपिस्थःकः कर्त्तरि॥ ५१॥इतिमा०टी०श्रीमद्दु०शंतनु०देवीमा०टीकायांनारायणीस्तुतिर्नामाष्टाशीतितमोऽध्यायः॥ ८८॥ 



॥ देव्युवाच ॥ यद्यपिप्रागपिदेवान्देव्येवोवाचतथाप्यध्यायादौदेवीवचनस्यप्राधान्यंध्वनयितुंदेवीमाहात्म्याध्ययनश्रवणादिफलप्राप्तिप्रामाण्यं

॥ देव्युवाच ॥ यद्यपिप्रागपिदेवान्देव्येवोवाचतथाप्यध्यायादौदेवीवचनस्यप्राधान्यंध्वनयितुंदेवीमाहात्म्याध्ययनश्रवणादिफलप्राप्तिप्रामाण्यंचदर्शयितुं
देव्येवोचितांवाचंदेवानुक्तवती ॥ यःपुरुषःसमाहितःभक्तिश्रद्धान्वितोभूत्वाएभिःप्रागुक्तैःस्तवैःस्तोत्रैःपुनःपुनःनित्यंअविकल्पितंयथाभवतितथाशश्वद्वा
मांदेवींस्तोष्यतेतस्यपुंसःसकलांबाधांशमयिष्यामिअसंशयंसंशयाभावः । अर्थाभावेव्ययीभावः ॥ यद्वा ॥ असंशयंयथास्यात्तथास्तोष्यते क्रियाफलेकर्तृग
तेञित्वादात्मनेपदं ॥ एभिरितिब्रह्मकृतैरिंद्रादिदेवकृतैश्च॥ हंसःसूर्यःपरमात्मा । असावादित्योब्रह्मेतिश्रुतेः । हंसस्यकलाहंसकला ॥ बाध्यंतेप्राणिनोनया
बाधासंसृतिःअविद्यमानाहंसकलाब्रह्मविद्यायस्यांसा अहंसकलाबाधामोहरूपाममतासंसृतिः॥ तांबाधांअसंशयंशमयिष्यामीत्यपिमुक्तिकामैरवगंतव्यं ।
रविश्वेतच्छदौहंसौ ॥ यद्वा ॥ एभिःस्तवैःमांयःस्तोष्यतेतस्याहंकारकृतांसकलांबाधांसंसृतिंशमयिष्यामि ॥ १ ॥ त्रयाणामन्वयैक्यं ॥ येपुरुषाएकचेतसःसं

॥ देव्युवाच ॥ ॥ एभिःस्तवैश्चमांनित्यंस्तोष्यतेयःसमाहितः ॥ तस्याहंसकलांबाधांनाशयिष्याम्यसंशयं॥ १॥
मधुकैटभनाशंचमहिषासुरघातनं ॥ कीर्त्तयिष्यंतियेतद्वद्वधंशुम्भनिशुम्भयोः ॥ २ ॥ अष्टम्यांचचतुर्दश्यांनवम्यां
चैकचेतसः ॥ स्तोष्यंतिचैवयेभक्त्यामममाहात्म्यमुत्तमं ॥ ३ ॥ नतेषांदुःकृतंकिंचिदुःकृतोत्थानचापदः ॥ नभ
विष्यतिदारिद्र्यंनचैवेष्टवियोजनं ॥ ४ ॥

तःसावधानाःसंतःअष्टम्यांनवम्यांचतुर्द्दश्यांचपक्षद्वयेपिविशेषानुक्तितः
यथाक्रममनपेक्ष्यमधुकैटभनाशंचमहिषासुरघातनंचतद्वच्छुंभनिशुम्भयोर्वधंचभक्त्याकीर्त्तयिष्यंतिपठिष्यंतितद्वदेवयेश्रोष्यंतिभक्त्याममम‌ाहात्म्यंउत्तमं
पुण्यतमंसर्वकामदुघं तेषांदुःकृतंदुरितंसर्वसंचितंनकिंचिदपिभविष्यतिदुःकृतोत्थाआपदश्चनभविष्यंतिविनश्यंतीत्यर्थः ॥ नतेषांदारिद्र्यंभविष्यतिआढ्य
तैवभविष्यतीत्यर्थः ॥ नचतेषांइष्टैःसहचेतनैरचेतनैश्चपुत्रादिभिर्द्धनादिभिश्चवियोजनंवियोगोभविष्यति ॥ मधुकैटभयोर्नाशंयस्मिन्ग्रन्थेसतथोक्तः ॥ ह
ननंघातःतस्यकरणंघातनंण्यंतात्ल्युट् ॥ महिषासुरस्यघातनं ॥ सूदनंइतिवापाठः ॥ षूदक्षरणेहिंसायांच ॥ वधोयस्मिन्ग्रंथेप्रतिपाद्यतेसवधः ॥ अर्श
आदित्वादच्कृतं ॥ शुम्भनिशुम्भयोरितिद्विवचनेनवधद्वयंसूच्यते ॥ तेनवधानांवैषम्यादष्टम्यादिदिनत्रयेणयथाक्रमकीर्त्तनशंकापिदूरीकृता ॥ एकमनन्यवृ
त्तिचेतोयेषांते ॥ भजनंभक्तिरनन्यशरणतयाश्रयणं ॥ महांतआत्मनःअवतारायस्याःसामहात्मादेवीतस्याभावःमाहात्म्यं ॥ २॥३॥ ४ ॥ ॥५॥

येममममाहात्म्यंकीर्त्तष्यंतिस्तोष्यंतिचतेषांकदाचिदपिशत्रुतोभयंनसंभविष्यति॥ दस्युतःतस्करतोपिवान ॥ राजतोपिनृपान्न नशस्त्रतःआयुधतः नअनल
तोग्नितः नतोयौघात्जलप्रवाहात् नसम्भविष्यतीत्यनेननसर्वत्रसम्बध्नाति ॥ ५ ॥ तस्माद्वांछितार्थसाधनत्वाद्धेतोःसमाहितैःसावधानैःकृतप्रयत्नैःपुंभिःपरं
प्रकृष्टंमहत्पूजनीयं ॥ स्वस्त्ययनंक्षेमकरं अयनंवर्त्मममदेव्याएतन्माहात्म्यंग्रन्थसंदर्भरूपंपत्त्यापठितव्यंश्रोतव्यंच ॥ एतन्माहात्म्यमितिबहुव्रीहिः ॥
ग्रन्थसंदर्भरूपोन्यपदार्थः ॥ शब्दस्येवपठनश्रवणयोग्यत्वेनविषयभावात् ॥ एतदितितुपृथक्पदत्वेमाहात्म्यंप्रतिपाद्यंतद्यत्रास्तिग्रन्थबंधेसोप्युपचारा
न्मत्वर्थीयेनअर्शआद्यचावामाहात्म्यशब्देनोच्यतइतिपठनश्रवणयोग्यंद्रष्टव्यं ॥ स्वस्त्याशीःक्षेमपुण्येषुमंगलेचाव्ययंस्मृतं ॥ ६ ॥ ममदेव्याःमाहात्म्यं
कर्त्तृ भक्तितःपठतांभक्तितःशृण्वतांचपुंसांमहामारिसमुद्भवात्सर्वानुपसर्गानुपद्रवान् शमयेद्दूरीकुर्यात् ॥ तथातेषांपुंसांत्रिविधंउत्पातंआध्यात्मिकंआधि

शत्रुतोनभयंतेषांदस्युतोवानराजतः ॥ नशस्त्रानलतोयौघात्कदाचित्संभविष्यति ॥ ५ ॥ तस्मान्ममैतन्माहात्म्यंप
ठितव्यंसमाहितैः ॥ श्रोतव्यंचसदाभक्त्यापरंस्वस्त्ययनंमहत् ॥ ६ ॥ उपसर्गानशेषांस्तुमहामारीसमुद्भवान् ॥
तथात्रिविधमुत्पातंमाहात्म्यंशमयेन्मम ॥ ७ ॥ यत्रैतत्पठ्यतेसम्यक्नित्यमायतनेमम ॥ सदानतद्विमोक्ष्यामि
सांनिध्यंतत्रमेस्थितं ॥ ८ ॥ ॥छ॥ ॥छ॥ ॥छ॥

दैविकमाधिभौतिकं ॥ अध्यात्मिकंशरीरोत्पन्नंरागद्वेषादिकंव्याध्यादिकंच ॥ आधिभौतिकंभूतप्रेतादिकजनितंभयभ्रमादिकं ॥ आधिदैविकंदेवकृतंवज्र
पातादिकंदारिद्र्यादिकंच॥यद्वा॥भूर्भुवःस्वःसम्भवमुत्पातत्रयंशमयेत् ॥ भौमंभूकंपादिकं आंतरिक्षंअनभ्रगर्जनादि । स्वर्लोकजनितमसकृदनेकोडुपत
नं ॥ महामारीतिमृङ्प्राणत्यागेस्त्रियामिक्कृष्यादिभ्यःछांदसोगुणः ॥ यद्वा ॥ औणादिकःसर्वधातुभ्यइन् ॥ स्त्रियांकृदिकारादक्तिनोवाङीप् ॥ महतीम
रीमहामारी ॥ अन्येषामपिदृश्यतइतिपूरुषवद्दीर्घः ॥महामार्याःसमुद्भवाः ॥ यद्वा ॥ मरणंमरःऋदोरप् ॥ मरस्येयंप्रवृत्तिर्मारी ॥यद्वा॥ मारयतिमारःकालः
मारस्यभावःमार्यंभावेष्यञ् ॥ मार्यमेवमारीस्त्रियांषित्वात्ङीष्॥७॥यत्रममायतनेगृहेप्रतिमादिमंदिरेएतत्प्रागुक्तचरितत्रयोपेतंमाहात्म्यंनित्यंप्रतिदिनंसम्य
गर्थतःपदतश्चशुद्धंपठ्यतेभक्तितःपुंभिःतदायतनंसदानविमोक्ष्यामिनत्यक्ष्यामि॥तत्रगृहेचममदेव्याःसांनिध्यंसंनिधानंसमवस्थानंस्थितंस्थितिमद्भूत् ॥ ८

बलिप्रदानेपूजायामग्निकार्येमहोत्सवे चसर्वंएतन्मम चरितंउच्चार्यं अवश्यंपठनीयं॥ ऋहद्धोर्ण्यंतु॥श्राव्यंअवश्यंश्रोतव्यंचओरावश्यकेण्यतु॥यद्वा॥ ण्यंताद्यो
यतु॥श्राव्यंश्रावयितव्यंसर्वंजपनीयं।एकदेशजपेतुछिद्रतास्यात्॥महानवम्यादौछागमेषमहापशुभिर्बलिदानंदेवतोद्देशेनपशुसमर्पणं ॥ ददातेर्ल्युट् ॥ पूजा
पुष्पोपहारदीपादिसमर्पणं॥यद्वा॥अलंकारवस्त्रस्रक्चन्दनवाहनच्छत्रचामरादिभिः॥ कुमारीसुवासिनीसमर्चनंपूजा॥अग्निकार्यंफाल्गुनेमासिअग्निज्वाला
र्चनंदेवीमाहात्म्यरूपमालामन्त्रपुरश्चरणांतेविहितहोमोग्निकार्यं ॥ एतत्त्रयलक्षणोमहोत्सवः ॥यद्वा॥चैत्रेवसंतोत्सवः । वैशाखेवारणपुष्पप्रचायिकोत्सवः॥
ज्येष्ठेजलक्रीडोत्सवः॥आषाढेइन्द्रध्वजोत्थानोत्सवः॥श्रावणेदोलोत्सवः ॥ भाद्रपदेइन्द्रपाणिधनुरर्चनोत्सवः॥ आश्वयुजिशारदोत्सवः ॥ कार्त्तिकेदीपोत्स
वः । मार्गशीर्षेमनूदयोत्सवः । पौषेनिधिपूजोत्सवः ॥ माघेमेरूत्सवः । फाल्गुनेगन्धर्वोत्सवः । एतेषुसंपूर्णंदेवीचरितंपठनीयंइतिभावः ॥ यद्वा ॥ महो

बलिप्रदानेपूजायामग्निकार्येमहोत्सवे ॥ सर्वंममैतच्चरितमुच्चार्यंश्राव्यमेवच ॥ ९ ॥ जानताजानतावापिबलिंपूजां
तथाकृतां ॥ प्रतीच्छिष्याम्यहंप्रीत्यावह्निहोमंतथाकृतं ॥ १० ॥ शरत्कालेमहापूजाक्रियतेयाचवार्षिकी ॥ तस्यां
ममैतन्माहात्म्यंश्रुत्वाभक्तिसमन्वितः ॥ ११ ॥ ॥छ॥ ॥छ॥

त्सवःसर्वश्रुतिपारायणं ॥ यद्वा ॥वदतेःकर्त्तरिक्किप् । वदतीष्टदेवतांइतिउत्देवीप्रणवः ॥ महान्उत्मन्त्रोयत्रसमहोत्सचासौसवश्चेतिमहोत्सवः ॥ मन्त्र
दीक्षाख्योयज्ञःतस्मिन् ॥ यद्वा ॥ उन्दीक्लेदने । उन्दनंउत् । स्त्रियांभावेसम्पदादिभ्यःक्किब्वावक्तव्यःउदःसवोदीक्षायज्ञःउत्सवःसुधोत्सवः सुधोत्स
वोयत्रमन्त्रग्रहेसमहोत्सवःतस्मिन् ॥ ९ ॥ तथातेनप्रकारेणइतिकर्त्तव्यतांगुरूपदिष्टेष्टदेवताराधनसामग्रीभावनीयोपक्रमोपसंहृतिक्रियाक्रमंजानता
अजानतावापिभक्तिमतापुंसाकृतंबलिंबलिप्रदानंतथातेनकृतांपूजांच ॥ तथातेनकृतंवह्नौहोमंतिलमध्वादिहोमद्रव्यप्रक्षेपंचप्रीत्याहंप्रतीच्छिष्यामिस्वी
करिष्यामि ॥ पतच्छ्रितंप्रतीच्छंस्यात् ॥ पतच्छ्रयणंप्रतीच्छा ॥ प्रतीच्छास्त्यस्यप्रतीच्छः कश्चित् ॥ अर्शआदित्वादच् ॥ ततःतद्वदाचरतीत्याचारेक्कि
प् ॥ सनाद्यंतत्वाद्धातुत्वात्प्रतीच्छधातोर्भविष्यतिकालेलृट्स्यप्रत्ययःमिप्इडागमः । अतोलोपः । इण्कोः । आदेशप्रत्यययोःषत्वं ॥ प्रतीक्षिष्यामी
तिपाठेईक्षदर्शनेअनुदात्तेत्त्वनिबंधनमात्मनेपदविधानमनित्यमितिचक्षिङोङित्करणंज्ञापकमित्युक्तत्वात्परस्मैपदं ॥ बलिपूजांइत्येकपदत्वेतु ॥ बलिना
पशुविशसनेनसहकृतापूजाबलिपूजा ॥ बलिरूपावापूजासत्कारःतं ॥ १० ॥ युग्मं ॥ याचप्रसिद्धावार्षिकीमहापूजाशरत्कालेक्रियतेतस्यांविषयेमम

एतन्माहात्म्यंचरित्रत्रयलक्षणंभक्तिसमन्वितःमनुष्यः पठित्वाश्रुत्वाचयथायोगंमत्प्रसादेनसर्वबाधाविनिर्मुक्तःधनधान्यसमन्वितःभविष्यतिसंशयोनात्रक र्तव्यः ॥ वर्षेणनिर्वृत्तावार्षिकीसांवत्सरिकी तेननिर्वृत्तमितिठक् ॥ स्त्रियांङीप् ॥ सर्वाबाधेतिपाठेआसमंताद्बाधाआबाधा ॥११॥ १२॥ एतच्चरित्रत्रयलक्ष णंममममाहात्म्यंभक्तितःश्रुत्वागुरुतोगृहीत्वार्थावबोधपर्यंतमधीत्यचपुमान्युद्धेनिर्भयोजायते ॥ तथाममशुभाःजगदभ्युदयकरीःपृथगुत्पत्तीः ब्रह्माण्या दिमहाशक्तिरूपप्रादुर्भूतीःश्रुत्वाह्व्याकलय्ययुद्धेनिर्भयोजायतेतथाममपराक्रमांश्ववीरकर्माणिचश्रुत्वा ॥ यद्वा ॥ युद्धेषुममपराक्रमांश्चश्रुत्वानिर्भयोजाय तेपुमान्॥ तथाचोत्पत्तयःशुभाइतिपाठेव्यत्ययोबहुलंइतिशसःप्रसंगेजसःप्रयोगःछांदसः ॥ युद्धेष्वितिबहुवचनमन्येष्वपिभयकारणेषुनिर्भयत्वार्थं ॥ युमि श्रणेअदादिः । सम्पदादित्वाद्भावेस्त्रियांक्विप् ॥ यवनंयुत्मिश्रणंपापसम्पर्कःतस्यांयुति ॥ यद्वा ॥ युञ्बन्धनेत्र्यादिःयवनंयुद्बंधनंतस्यांयुति॥ओहाङ् ॥

सर्वबाधाविनिर्मुक्तोधनधान्यसमन्वितः ॥ मनुष्योमत्प्रसादेनभविष्यतिनसंशयः ॥ १२॥ श्रुत्वाममैतन्माहात्म्यं तथोत्पत्तीःपृथक्शुभाः ॥ पराक्रमांश्वयुद्धेषुजायतेनिर्भयःपुमान् ॥ १३ ॥ रिपवःसंक्षयंयांतिकल्याणंचोपपद्यते नन्दतेचकुलंपुंसांमाहात्म्यंममशृण्वतां ॥ १४ ॥शांतिकर्मणिसर्वत्रतथादुःस्वप्नदर्शने ॥ ग्रहपीडासुचोग्रासुमा हात्म्यंशृणुयान्मम ॥ १५ ॥ उपसर्गाःशमंयांतिग्रहपीडाश्चदारुणाः ॥ दुःस्वप्नंचनृभिर्दृष्टंसुस्वप्नमुपजायते ॥१६॥

गतौसम्पदादित्वात्क्विप् ॥ हीनंहाःनिरयादिगतिःतस्यां ॥ इःकामःतत्रविषये ॥ युच्चहाश्चइश्चयुद्धयः । तेषुयुद्धेषु ॥ १३ ॥ भक्तितःममममाहात्म्यंशृण्व तांपुंसांरिपवःशत्रवःसंक्षयंयांतिकल्याणंचमंगलंउपपद्यते ॥ पदगतौदिवादिः ॥ उपसमीपंगच्छति । उपजायतेइतिवापाठः । कुलंगोत्रंचनंदते टुनदिस मृद्धौपरस्मैपदी । कर्त्तरिकर्मव्यतिहारेइत्यात्मनेपदं ॥ यद्वा ॥ ण्यंतात्कर्मकर्त्तरियिगात्मनेपदंच । संततिर्गोत्रजननकुलान्यभिजनान्वयौ ॥ कुलंगृहेच तालंकेभूमिग्राहिणितुत्रिषु ॥ १४ ॥ उत्पातादिसूचितोपद्रवाणांसर्वत्रसर्वस्मिन्शांतिकर्मणितथादुःस्वप्नदर्शनेदुष्टफलस्वप्नदर्शने । उग्रासुअत्यनिष्ट फलासुग्रहकृतासुपीडासुममममाहात्म्यंशृणुयात्पुरुषःततःसर्वबाधोपशांतिर्भवतिसर्वेष्टार्थसिद्धिश्चेतिभावः ॥ १५ ॥ पूर्वोक्तंपुनर्व्यनक्ति ॥ मममाहात्म्यश्र ॥२०३॥ वणादुपसर्गाःबाधाःअतिवृष्ट्यादयःशमंयांति ॥ यद्वा ॥ उपसर्गात्स्वात्वा ... ॥ अजन्यं ... उत्पातउपसर्गःसमंत्रयं ॥ तथाततएवदारु



णाःभयानकाःग्रहपीडाःशन्यादिकृताबाधाशमंशांतिंयांति ॥ नृभिःदृष्टंदुःस्वप्नंसुस्वप्नमुपजायते ॥ दुःस्वप्नसूचितंयद्दुष्टंफलंतत्सुस्वप्नसूचितमिष्टफलं

णाःभयानकाःग्रहपीडाःशन्यादिकृताबाधाशमंशांतिंयांति ॥ नृभिःदृष्टंदुःस्वप्नंसुस्वप्नमुपजायते ॥ दुःस्वप्नसूचितंयद्दुष्टंफलंतत्सुस्वप्नसूचितमिवफलंसं
पद्यतइतिभावः ॥ अतर्कितप्राप्यफलोहिमणिमंत्रौषधदेवताप्रभावः । दुःस्वप्नसुस्वप्नयोर्नियतेपुंल्लिंगत्वेपिबहुव्रीहौफलेन्यपदार्थेविवक्षितेनपुंसकतोपप
त्तिः ॥ अर्द्धर्चादौस्वप्नशब्दोनास्त्येव ॥ अन्यथास्यपुंनपुंसकतोपपद्येत ॥ दुःस्वप्नश्चेतिपाठोवा ॥ १६ ॥ बालानांशिशूनांग्रहाःपीडकाःपूतनादयःश्मशा
नादिवासिनोदृष्टिबंधिगलबंध्यंत्रबन्धिनाभिबन्धिशुक्रबंध्युपस्थबंधिरुधिरशोषिपिशितशोषिमूत्रशोषिलालाशोषिप्रभृतयश्चतैरभिभूतानामाक्रांतानांशांति
कारकंउपशमनकारणंममामाहात्म्यश्रवणाद्युत्तममाश्रयणीयं ॥ किंच ॥ नृणांएककार्यकारिणांकथंचित्परकृतोच्चाटनप्रयोगतःसंघातभेदेप्रसक्तेसतिम
न्माहात्म्यश्रवणमेवोत्तमंमैत्रीकरणंमित्रत्वकरणसाधनं ॥ १७ ॥ दुष्टंवृत्तंचरितंयेषांतेदुर्वृत्ताःतेषामशेषाणांपरंश्रेष्ठंबलहानिकरंबलनाशहेतुःमन्माहात्म्यं॥

बालग्रहाभिभूतानांबालानांशांतिकारकं ॥ संघातभेदेचनृणांमैत्रीकरणमुत्तमं ॥ १७ ॥ दुर्वृत्तानामशेषाणांबलहा
निकरंपरं ॥ रक्षोभूतपिशाचानांपठनादेवनाशनं ॥१८॥ सर्वंममैतन्माहात्म्यंममसंनिधिकारकं ॥ सर्वंकृत्स्नमेतदा
दिमध्यावसानलक्षणं ॥ १९ ॥ पशुपुष्पार्घधूपैश्चगन्धदीपैस्तथोत्तमैः॥विप्राणांभोजनैर्होमैःप्रेक्षणीयैरहर्निशं ॥२०॥

कृत्रोहेतौटः ॥ किंचरक्षसांमायोपजीविनांभूतानांबालग्रहादीनांपिशाचानांपिशिताशनानांतामसानांचपीडकानामदृश्यरूपाणांममाहात्म्यस्यपठनादेव
नाशनंदूरीकरणंभवति ॥१८॥ ममसांनिध्यकारकंनैकट्यकारकं ॥ संनिधिकारकंइतिपाठेपिसंनिधिःसंनिधानं इतिव्याख्याश्रयणात्सएवार्थः॥यद्वा॥ संनि
धिःमहानिधिःमहापद्मादिःतस्यकारकंप्रापकंपठ्यमानंसदितिभावः ॥१९॥ युग्मं ॥ पुंभिरेभिःप्रकारैर्वत्सरेणयाक्रियतेमेमहतीप्रीतिःसास्मिन्सन्माहात्म्येस
कृदेकवारमेवउच्चरितेपठितेश्रुतेवाभक्तिमद्भिःसर्वकामदुघोपार्जितेवस्यात् ॥ पशुभिःचतुष्पाद्भिःछागमेषमहिषमातंगादिभिःद्विपाद्भिर्महापशुभिश्चनरैःपु
ष्पैःसुरभिसंभृतैःअर्घैःपूजांगैर्मधुघृतादिभिःधूपैःकर्पूरागरुमृगमदादिगर्भितैर्बहुरूपादिभिर्नानाकृतिगन्धादिभिः चशब्दात् श्रीवासादिधूपागृह्यंते॥ तैर्गंधैः
गन्धसारघनसाररक्तचन्दनमृगमदकंकोलकालागरुकुंकुमादिभिः दीपैःकर्पूरघृतादिप्रवर्तितैर्माणिक्यमहोभिरुपकल्पितैःसूर्यमहोभिश्चन्द्रमहोभिरुडुमहो
भिःपरमात्मपरज्योतिर्भिश्चोपकल्पितैः । अतएवैवंविधैरुत्तमैःश्रेष्ठतमैः।तथाउत्तमैर्विविधैर्विप्राणांकर्त्तव्यैर्भोजनैःषड्रसोपेतैर्भोज्यैरन्नादिभिरुचितैः ॥ तथा

त्रिंशोऽहामिमेभीताःशरणंमामुपागताः ॥ अपकर्त्तात्वमेवैषां ् यंवध्योनमेभवान् ॥ २६ ॥ मरुत्तउवाच ॥ ॥ मित्रंवाबान्ध
वोवाऽपिपितावायदिवागुरुः॥ प्रजापालनविघ्नाययोहन्तव्यःसभूभृता ॥ २७ ॥ सोऽहन्तेप्रहरिष्यामिनक्रोद्धव्यंत्वयापि
तः॥ स्वंधर्मःपरिपाल्योमेनमेक्रोधस्तवोपरि ॥ २८ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततस्तौनिश्चितौदृष्ट्वापरस्परवधंप्र
ति ॥ समुत्पत्यान्तरेतस्थुर्मुनयोभार्गवादयः॥ २९ ॥ ऊचुश्चैनंनमोक्तव्यंत्वयास्त्रंपितरंप्रति ॥ त्वयाचनायंहन्तव्यःपुत्रः
प्रख्यातचेष्टितः ॥ ३० ॥ ॥ मरुत्तउवाच ॥ ॥ मयादुष्टानिहन्तव्याःसन्तोरक्ष्यामहीक्षिता ॥ इमेचदुष्टाभुजगाः
कोऽपराधोऽत्रमेद्विजाः ॥ ३१ ॥ ॥ अविक्षिदुवाच ॥ ॥ शरणागतसन्त्राणंमयाकार्यमथश्रमे ॥ अपराध्यःसुतो
विप्रायोहन्तिशरणागतान् ॥ ३२ ॥ ॥ ऋषयऊचुः ॥ ॥ इमेवदन्तिभुजगास्त्रासलोलविलोचनाः ॥ संजीवया
मस्तान्विप्रान्येदष्टादुष्टपन्नगैः ॥ ३३ ॥ तदलंविग्रहेणोभौराजवर्यौप्रसीदताम् ॥ उभावपिविनिर्मूढप्रतिज्ञौधर्मको
विदौ ॥ ३४ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ सातुवीरासमभ्येत्यपुत्रमेतदभाषत ॥ मद्वाक्यादेषतेपुत्रोहन्तुंनागान्कृतो
द्यमः ॥ ३५ ॥ तन्निष्पन्नंयदाविप्रास्तेजीवन्तितथामृताः ॥ सजीवन्तश्चमुच्यन्तेयद्युष्मच्छरणंगताः॥ ३६ ॥ ॥ भामि
न्युवाच ॥ ॥ अहमभ्यर्थितापूर्वमेभिःपातालसंश्रयैः ॥ तन्निमित्तमयंभर्त्तामयात्रविनियोजितः ॥ ३७ ॥ तदेतदा
येनिर्वृत्तमुभयोरपिशोभनम् ॥ ममभर्तुश्चपुत्रस्यत्वत्पात्रैस्यात्मजस्यच ॥ ३८ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततः
संजीवयामासुस्तान्विप्रांस्तेभुजङ्गमाः ॥ दिव्यैरोषधिजातैश्चविषसंहरणेनच ॥ ३९ ॥ पित्रोर्ननामचरणौसततोज

गतीपतिः ॥ मरुत्तश्चसतंप्रीत्यापरिष्वज्येदमब्रवीत् ॥ ४० ॥ मानहाभवशत्रूणांचिरंपालयमेदिनीम् ॥ पुत्रपौत्रैश्चमो

दस्वमाचतेसन्तुविद्विषः ॥ ४१ ॥ ततोद्विजैरनुज्ञातोवीरयाचनरेश्वरौ ॥ समारूढौरथंसाचभामिनीस्वपुरङ्गता ॥ ४२ ॥
वीराऽपिकृत्वासुमहत्तपोधर्मभृतांवरा ॥ भर्तुःसलोकतांप्राप्तामहाभागापतिव्रता ॥ ४३ ॥ मरुत्तोऽपिचकारोर्व्यांधर्म
तःपरिपालनम् ॥ विनिर्जितारिषड्वर्गोभोगांश्चबुभुजेनृपः ॥ ४४ ॥ तस्यपत्नीमहाभागाविदर्भतनयातथा ॥ प्रभावती
सुवीरस्यसौवीरीचाभवत्सुता ॥ ४५ ॥ सुकेशीकेतुवीर्य्यस्यमागधस्यात्मजाऽभवत् ॥ सुताचसिन्धुवीर्य्यस्यमद्रराज
स्यकेकयी ॥ ४६ ॥ केकयस्यचसैरन्ध्रीसिन्धुभर्तुर्वपुष्मती ॥ चेदिराजसुताचाभूद्भार्य्यातस्यसुशोभना ॥ ४७ ॥ ता
सांपुत्रास्तस्यचासन्भूभृतोऽष्टादशद्विज ॥ तेषांप्रधानोज्येष्ठश्चनरिष्यंतःसुतोऽभवत् ॥ ४८ ॥ एवंवीर्य्योमरुत्तोऽभून्म
हाराजोमहाबलः ॥ तस्याप्रतिहतंचक्रमासीद्द्वीपेषुसप्तसु ॥ ४९ ॥ यस्यतुल्योऽपरोराजानभूतोनभविष्यति ॥ सत्व
विक्रमयुक्तस्यराजर्षेरमितौजसः ॥ ५० ॥ तस्यैतच्चरितंश्रुत्वामरुत्तस्यमहात्मनः ॥ जन्मचाग्र्यंद्विजश्रेष्ठमुच्यतेसर्व
किल्बिषैः ॥ ५१ ॥ इतिश्रीमार्कण्डेयपुराणेमरुत्तचरितेऊनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ छ ॥ ॥ छ ॥
क्रोष्टुकिरु० ॥ मरुत्तचरितंकृत्स्नंभगवन्कथितंत्वया ॥ तत्संततिमशेषेमश्रोतुमिच्छाप्रवर्तते ॥ १ ॥ तत्संततौक्षितीशा
येराज्यार्हावीर्यशालिनः ॥ तानहंश्रोतुमिच्छामित्वयाख्यातान्महामुने ॥ २ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ नरिष्यंतइति
ख्यातोमरुत्तस्याभवत्सुतः ॥ अष्टादशानांपुत्राणांसज्येष्ठःश्रेष्ठएवच ॥ ३ ॥ वर्षाणांचसहस्राणिसप्ततिंदशपंचच ॥ बु
भुजेपृथिवींकृत्स्नांमरुत्तः क्षत्रियर्षभः ॥ ४ ॥ कृत्वाराज्यंस्वधर्मेणइष्ट्वायज्ञाननुत्तमान् ॥ नरिष्यंतसुतंज्येष्ठमभिषिच्य
प्रयौवनं ॥ ५ ॥ एकाग्रचित्तःसन्नृपस्तप्त्वातत्रतपोमहत् ॥ आरुरोहदिवंविप्रयशसावृत्यरोदसी ॥ ६ ॥ नरिष्यंतःसुतः

सोऽप्यचिंतयामासबुद्धिमान् ॥ पितुर्वृत्तंसमालोक्यतथान्ये चभूभृतां ॥ ७ ॥ अत्रवंशेमहात्मानोराजानोममपूर्वजाः ॥
यज्विनोधर्मतः पृथ्वींपालयामासुरूर्जिताः ॥ ८ ॥ दातारश्चापिवित्तानांसंग्रामेष्वनिवर्तिनः ॥ तेषांकश्चरितंशक्तस्त्व
नुयातुंमहात्मनां ॥ ९ ॥ किंतुतैर्यत्कृतंकर्मधर्म्यमाहवनादिभिः ॥ तदहंकर्तुमिच्छामितच्चनास्तिकरोमिकिं ॥ १० ॥ ध
र्मात्पालयतःपृथ्वींकोगुणोत्रमहीपतेः ॥ असम्यक्पालनात्पापीनरेंद्रोनरकंव्रजेत् ॥ ११ ॥ सतिवित्तेमहायज्ञाःकर्तव्याए
वभूभृता ॥ दातव्यंचात्रकिंचित्रंसीदतामीश्वरोगतिः ॥ १२ ॥ आभिजात्यंतथालज्जाकोपश्चारिजनाश्रयः ॥ कारयंति
स्वधर्मश्चसंग्रामादपलायनं ॥ १३ ॥ एतत्सर्वंयथासम्यङ्मत्पूर्वैःपुरुषैःकृतं ॥ पित्राचमेमरुत्तेनतथातत्केनशक्यते ॥ १४ ॥
तदहंकिंकरिष्यामियत्तुतैःपूर्वजैःकृतं ॥ येयज्विनोवशदांताःसंग्रामाच्चानिवर्तिनः ॥ १५ ॥ महत्संग्रामसंमर्देष्वविसंवा
दिपौरुषाः ॥ कर्मणेहंयतिष्यामिकस्मैतानभिसंधितुं ॥ १६ ॥ अथवातैःस्वयंयज्ञाःकृताःपूर्वजनेश्वरैः ॥ अविश्रमद्भिर्ना
न्यैस्तुकारितास्तत्करोम्यहं ॥ १७ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतिसंचिंत्ययज्ञंसचकारैकंनरेश्वरः ॥ यादृशंनचकारान्यो
वित्तोत्सर्गोपशोभितं ॥ १८ ॥ द्विजानांजीवनायालंदत्वातुसुमहाधनं ॥ ततःशतगुणंतेषांयज्ञार्थमददन्नृपः ॥ १९ ॥ गा
वोवस्त्राण्यलंकारंधान्यागारादिकंतथा ॥ प्रत्येकममदत्तेषांसर्वपृथ्वीनिवासिनां ॥ २० ॥ ततस्तेनयदायज्ञःप्रारब्धोभूभु
जापुनः ॥ प्रारब्धेसमखेयष्टुंततोनालभतद्विजान् ॥ २१ ॥ यान्यान्वृणोतिसनृपोविप्रानार्त्विज्यकर्मणि ॥ तेतेतमूचु
र्यज्ञायवयमप्यत्रदीक्षिताः ॥ २२ ॥ अन्यंवरययद्वित्तंत्वयास्माकंविसर्जितं ॥ तस्यांतोनास्तियज्ञेषुदद्यास्त्वंनृपतेकथं
॥ २३ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ नचापऋत्विजोविप्रास्तदाशोचक्षितीश्वरः ॥ बहिर्वेद्यांतदादानंसदातुमुपचक्रमे ॥ २४ ॥

 

दस्वमाचतेसन्तुविद्विषः ॥ ४१ ॥ ततोद्विजैरनुज्ञातोवीरयाचनरेश्वरौ ॥ समारूढौरथंसाचभामिनीस्वपुरङ्गता ॥ ४२ ॥
वीराऽपिकृत्वासुमहत्तपोधर्मभृतांवरा ॥ भर्तुःसलोकतांप्राप्तामहाभागापतिव्रता ॥ ४३ ॥ मरुत्तोऽपिचकारोर्व्यांधर्म
तःपरिपालनम् ॥ विनिर्जितारिषड्वर्गोभोगांश्वबुभुजेनृपः ॥ ४४ ॥ तस्यपत्नीमहाभागाविदर्भतनयातथा ॥ प्रभावती
सुवीरस्यसौवीरीचाभवत्सुता ॥ ४५ ॥ सुकेशीकेतुवीर्य्यस्यमागधस्यात्मजाऽभवत् ॥ सुताचसिन्धुवीर्य्यस्यमद्रराज
स्यकेकयी ॥ ४६ ॥ केकयस्यचसैरन्ध्रीसिन्धुभर्तुर्वपुष्मती ॥ चेदिराजसुताचाभूद्भार्य्यातस्यसुशोभना ॥ ४७ ॥ ता
सांपुत्रास्तस्यचासन्भूभृतोऽष्टादशद्विज ॥ तेषांप्रधानोज्येष्ठश्चनरिष्यंतःसुतोऽभवत् ॥ ४८ ॥ एवंवीर्य्योमरुत्तोऽभून्म
हाराजोमहाबलः ॥ तस्याप्रतिहतंचक्रमासीद्द्वीपेषुसप्तसु ॥ ४९ ॥ यस्यतुल्योऽपरोराजानभूतोनभविष्यति ॥ सत्व
विक्रमयुक्तस्यराजर्षेरमितौजसः ॥ ५० ॥ तस्यैतच्चरितंश्रुत्वामरुत्तस्यमहात्मनः ॥ जन्मचाग्र्यंद्विजश्रेष्ठमुच्यतेसर्व
किल्बिषैः ॥ ५१ ॥ इतिश्रीमार्कण्डेयपुराणेमरुत्तचरितेऊनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥ ॥ छ ॥ ॥ छ ॥
क्रोष्टुकिरु॰ ॥ मरुत्तचरितंकृत्स्नंभगवन्कथितंतत्वया ॥ तत्संततिमशेषेमश्रोतुमिच्छाप्रवर्तते ॥ १ ॥ तत्संततौक्षितीशा
येराज्यार्हावीर्यशालिनः ॥ तानहंश्रोतुमिच्छामित्वयाख्यातान्महामुने ॥ २ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ नरिष्यंतइति
ख्यातोमरुत्तस्याभवत्सुतः ॥ अष्टादशानांपुत्राणांसज्येष्ठःश्रेष्ठएवच ॥ ३ ॥ वर्षाणांचसहस्राणिसप्ततिंदशपंचच ॥ बु
भुजेपृथिवींकृत्स्नांमरुत्तः क्षत्रियर्षभः ॥ ४ ॥ कृत्वाराज्यंस्वधर्मेणइष्ट्वायज्ञाननुत्तमान् ॥ नरिष्यंतसुतंज्येष्ठमभिषिच्य
ज्येष्ठेवनं ॥ ५ ॥ एकाग्रचित्तःसनृपस्तस्थावतत्रतपोमहत् ॥ आरुरोहदिवंविप्रयशसाव्याप्त्यरोदसी ॥ ६ ॥ नरिष्यंतःसुतः

सोऽप्यचिंतयामासबुद्धिमान् ॥ पितुर्वृत्तंसमालोक्यतथान्ये .चभूभृतां ॥ ७ ॥ अत्रवंशेमहात्मानोराजानोममपूर्वजाः ॥
यज्विनोधर्मतः पृथ्वीपालयामासुरूर्जिताः ॥ ८ ॥ दातारश्चापिवित्तानांसंग्रामेष्वनिवर्तिनः ॥ तेषांकश्चरितंशक्तस्त्व
नुयातुंमहात्मनां ॥ ९ ॥ किंतुतैर्यत्कृतंकर्मधर्म्यमाहवनादिभिः ॥ तदहंकर्तुमिच्छामितच्चनास्तिकरोमिकिं ॥ १० ॥ ध
र्मात्पालयतःपृथ्वींकोगुणोत्रमहीपतेः ॥ असम्यक्पालनात्पापीनरेंद्रोनरकंव्रजेत् ॥ ११ ॥ सतिवित्तेमहायज्ञाःकर्तव्याए
वभूभृता ॥ दातव्यंचात्रकिंचित्रंसीदतामीश्वरोगतिः ॥ १२ ॥ आभिजात्यंतथालज्जाकोपश्चारिजिनाश्रयः ॥ कारयंति
स्वधर्मश्चसंग्रामादपलायनं ॥ १३ ॥ एतत्सर्वंयथासम्यङ्मत्पूर्वैःपुरुषैःकृतं ॥ पित्राचमेमरुत्तेनतथातत्केनशक्यते॥ १४॥
तदहंकिंकरिष्यामियत्तुतैःपूर्वजैःकृतं ॥ येयज्विनोवरादांताःसंग्रामाच्चानिवर्तिनः ॥ १५ ॥ महत्संग्रामसंमर्देष्वविसंवा
दिपौरुषाः ॥ कर्मणेहंयतिष्यामिकस्मैतानभिसंधितुं ॥ १६ ॥ अथवातैःस्वयंयज्ञाःकृताःपूर्वजनेश्वरैः ॥ अविश्रमद्भिर्ना
न्यैस्तुकारितास्तत्करोम्यहं ॥ १७ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इतिसंचिंत्ययज्ञंसचकारैकंनरेश्वरः ॥ यादृशंनचकारान्यो
वित्तोत्सर्गोपशोभितं ॥ १८ ॥ द्विजानांजीवनायालंदत्वातुसुमहाधनं ॥ ततःशतगुणंतेषांयज्ञार्थमददन्नृपः ॥ १९ ॥ गा
वोवस्त्राण्यलंकारंधान्यागारादिकंतथा ॥ प्रत्येकममदत्तेषांसर्वपृथ्वीनिवासिनां ॥ २० ॥ ततस्तेनयदायज्ञःप्रारब्धोभूभु
जापुनः ॥ प्रारब्धेसमखेयष्टुंततोनालभतद्विजान् ॥ २१ ॥ यान्यान्वृणोतिसनृपोविप्रानार्त्विज्यकर्मणि ॥ तेतेतमूचु
र्यज्ञायवयमप्यत्रदीक्षिताः ॥ २२ ॥ अन्यंवरययद्वित्तंत्वयास्माकंविसर्जितं ॥ तस्यांतोनास्तियज्ञेषुदद्यास्त्वंनृपतेकथं
॥ २३ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ नचापश्यद्विजोविप्रास्तदाशेषक्षितीश्वरः ॥ बहिर्वेद्यांतदादानंसदातुमुपचक्रमे ॥ २४ ॥

तथापिजगृहुर्नैवधनसंपूर्णमंदिराः॥ द्विजायदातुंभूयोऽसौनिर्विण्णइदमब्रवीत्॥ २५॥ अहोतिशोभनंपृथ्व्यांयद्विप्रोनाथ
नःक्वचित्॥ अशोभनंचयत्कोशोविफलोयमयज्विनः॥ २६ ॥ नार्त्विज्यंकुरुतेकश्चिद्यजमानोखिलोजनः॥ द्विजानां
नचनोदानंददतांसंप्रतीच्छते ॥ २७ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ततःकांश्चिद्द्विजान्भक्त्याप्रणिपत्यपुनःपुनः॥ स्वय
ज्ञेऋत्विजश्चक्रेतेप्रचक्रुर्महामखं॥ २८ ॥ अत्यद्भुतमिदंचासीद्यदातस्यमहीपतेः॥ सयज्ञोभूत्तदापृथ्व्यांयजमानोऽखि
लोजनः॥ २९ ॥ द्विजन्मनामभून्नासीत्सदस्यस्तत्रकश्चन॥ यजमानाद्द्विजाःकेचित्केचित्तेषांतुयाजकाः॥ ३० ॥ न
रिष्यंतोनरपतिरियाजसयदातदा ॥ तत्प्रदातुर्धनैर्यागंकुर्युःपृथ्व्यामशेषतः॥ ३१ ॥ प्राच्यांकोट्यस्तुयज्ञानामासन्नष्टाद
शाधिकाः॥ प्रतीच्यांसप्तवैकोट्योदक्षिणायांचतुर्दश ॥ ३२ ॥ उत्तरस्यांचपंचाशदेककालंतदाभवन्॥ मुनेब्राह्मणयज्ञा
नांनरिष्यंतोयदाऽयजत्॥ ३३ ॥ एवंसराजाधर्मात्मानरिष्यंतोऽभवत्पुरा॥ मरुत्ततनयोविप्रविख्यातबलपौरुषः॥ ३४॥
इतिश्रीमार्कण्डेयपुराणेनरिष्यंतचरितंनामत्रिंशदधिकशततमोऽध्यायः॥ १३०॥ ॥ मार्कण्डेयउवाच॥ ॥ नरिष्यंतस्यत
नयोदुष्टारिदमनोदमः॥ शक्रस्येवबलंतस्यदयाशीलंमुनेरिव ॥ १ ॥ बाभ्रव्यामिंद्रसेनायांसजज्ञेतस्यभूभृतः॥ नववर्षा
णिजठरेस्थित्वामातुर्महायशाः॥ २ ॥ यद्दाहयामासदमंमातरंजठरेस्थितः॥ दमशीलश्चभावितायतश्चायंनृपात्मजः॥ ३॥
ततस्त्रिकालविज्ञानःसहितस्यपुरोहितः ॥ दमइत्यकरोन्नामनरिष्यंतसुतस्यतु॥ ४ ॥ सदत्तोराजपुत्रस्तुधनुर्वेदमशेषतः॥
जगृहेसुरराजस्यसकाशाद्वृषपर्वणः॥ ५ ॥ दुन्दुभेर्दैत्यवर्य्यस्यतपोवननिवासिनः॥ सकाशाज्जगृहेकृत्स्नमस्त्रग्रामञ्चतत्त्व
तः॥ ६ ॥ शक्तेःसकाशाद्वेदांश्चवेदाङ्गान्यखिलानिच॥ तथार्ष्टिषेणाद्राजर्षेर्जगृहेयोगमात्मवान्॥ ७॥ तंस्वरूपमहात्मनं

गृहीतास्त्रंमहाबलम् ॥ स्वयंवरेकृतापित्राजगृहेसुमनापतिम् ॥ ८॥ सुतादशार्णाधिपतेर्बलिनश्चारुवर्मणः ॥ पश्यतांसर्वभू
तानांयेतदर्थमुपागताः ॥९॥ तस्यांचसानुरागोऽभून्मद्रराजस्यवैसुतः ॥ सुमनायांमहानादोमहाबलपराक्रमः ॥ १० ॥ त
थाविदर्भाधिपतेःपुत्रःसंक्रन्दनस्यच ॥ वपुष्मानूराजपुत्रश्चमहाधनुरुदारधीः ॥११॥ तेतदातंवृतंदृष्टादुष्टारिदमनंदमम् ॥
मन्त्रयामासुरन्योऽन्यंतत्रानङ्गविमोहिताः ॥ १२ ॥ एतामस्यबलात्कन्यांगृहीत्वारूपशालिनीम् ॥ गृहंप्रयामस्तस्येयम
स्माकंयंग्रहीष्यति ॥ १३ ॥ भर्तृबुद्ध्यावरारोहास्वयंवरविधानतः ॥ तस्येच्छयानोभवित्रीभार्य्याधर्मोपपादिता ॥१४॥
अथनेच्छतिसाकञ्चिदस्माकंमदिरेक्षणा ॥ ततस्तस्यभवित्रीसायोदमंघातयिष्यति ॥ १५ ॥ ॥ मार्कण्डेयउवाच ॥ ॥इ
तितेनिश्चयंकृत्वात्रयःपार्थिवनन्दनाः ॥ जगृहुस्तांसुचार्वङ्गींदमपार्श्वानुवर्त्तिनीम् ॥ १६ ॥ ततःकेचिन्नृपास्तेषांयेतत्पक्षा
विचुक्रुशुः ॥ चुक्रुशुश्चापरेभूपाःकेचिन्मध्यस्थतांगताः ॥ १७ ॥ ततोदमस्तान्भूपालानवलोक्यसमन्ततः ॥ अनाकु
लमनावाक्यमिदमाहमहामुने ॥ १८ ॥ ॥ दमउवाच ॥ ॥ भोभूपाधर्मकृत्येषुयद्वदन्तिस्वयंवरम् ॥ दशार्णपतिनाभूपाः
कृतेधर्मेस्वयंवरे ॥ अधर्मोवाऽथवाधर्मोयदेभिर्गृह्यतेबलात् ॥१९॥ यद्यधर्मोनमेकार्यमन्यभार्य्याभविष्यति ॥ धर्मोवात
दलंप्राणैर्यैरक्ष्यन्तेऽरिलंघने ॥ २० ॥ ततोदशार्णाधिपतिश्चारुवर्मानराधिपः ॥ निःशब्दंकारयित्वाततूसदःप्राहमहामुने ॥
॥ २१ ॥ दमेनयदिदंप्रोक्तंधर्माधर्माश्रितंनृपाः ॥ तद्वदध्वंयथाधर्मोममास्यचनलुप्यते ॥ २२ ॥ ॥ मार्कण्डेयउवाच ॥ ॥
ततःकेचिन्महीपालास्तमूचुर्वसुधाधिपम् ॥ परस्परानुरागेणगान्धर्वोविहितोविधिः ॥ २३ ॥ क्षत्रियाणांपरमयंनविट

शूद्रद्विजन्मनाम् ॥ दममाश्रित्यनिष्पन्नःसचास्याद्दुहितुस्तव ॥ २४ ॥ इतिधर्माद्दमस्यैषाद्दुहितातवपार्थिव ॥ योऽन्यथा

वर्त्ततेमोहात्कामात्मासम्प्रवर्त्तते ॥ २५ ॥ तथाऽपरेतदाप्रोचुर्हात्मानोहिभूभृताम् ॥ पक्षेयेभूभृतोविप्रदशार्णाधिपतिं
वचः ॥ २६ ॥ मोहात्किमाहुर्धर्मोऽयंगान्धर्वःक्षत्रजन्मनः ॥ नत्वेषशास्तानान्योहिराक्षसःशस्त्रजीविनाम् ॥ २७ ॥ बला
दिमांयोहरतिहत्वातुपरिपन्थिनः ॥ तस्यैषास्याद्राक्षसेनविवाहेनावनीश्वराः ॥ २८ ॥ प्रधानतरएषोऽत्रविवाहद्वितयेम
तः ॥ क्षत्रियाणामतोधर्मोमहानन्दादिभिःकृतः ॥२९ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ अथप्रोचुःपुनर्भूपायैःपूर्वमुदितोनृपः॥
परस्परानुरागेणजातिधर्माश्रितंवचः ॥ ३० ॥ सत्यंशस्तोराक्षसोऽपिक्षत्रियाणांपरोविधिः ॥ किन्त्वसौजनकस्वाम्येकु
मार्य्यानुमतोवरः ॥ ३१ ॥ हत्वातुपितृसम्बन्धंबलेनह्रियतेह्रिया ॥ सराक्षसोविधिःप्रोक्तोनात्रभर्तृकरेस्थिता ॥ ३२ ॥
पश्यतांसर्वभूपानामनयायद्वृतोदमः ॥ गान्धर्वस्येहनिष्पत्तौविवाहोराक्षसोऽत्रकः ॥ ३३ ॥ विवाहितायाःकन्यायाःक
न्यात्वंनैवविद्यते ॥ कन्यायाश्चविवाहेनसम्बन्धःपृथिवीश्वराः ॥ ३४ ॥ तइमेयेबलादेनांदमादादातुमुद्यताः ॥ बलिन
स्तेयदिततःकुर्वन्तुनतुसाधुतत् ॥ ३५ ॥ ॥ मार्कंण्डेयउवाच ॥ ॥ तच्छ्रुत्वाऽसौदमःकोपकषायीकृतलोचनः ॥ आरोप
यामासधनुर्वचनंचेदमब्रवीत् ॥ ३६ ॥ ममापिभार्य्याबलिभिःपश्यतोह्रियतेयदि ॥ तत् कुलेनभुजाभ्यांवाकोगुणःक्लीबज
न्मनः ॥ ३७ ॥ धिङ्ममास्त्राणिधिक्शौर्य्यंधिक्शरान्धिक्शरासनम् ॥ धिग्व्यर्थंमेकुलेजन्ममरुत्तस्यमहात्मनः ॥ ३८ ॥
यदिभार्य्यामिमेमूढाःसमादायबलान्विताः ॥ प्रयान्तिजीवतोधिक्तांममव्यर्थमनुष्यताम् ॥ ३९ ॥ इत्युक्त्वातान्महीपा
लान्महानन्दमुखान्बली ॥ अथाब्रवीत्तदासर्वान्महारिदमनोदमः ॥ ४० ॥ एषातिशोभनाबालाचार्वङ्गीमदिरेक्षणा ॥
किन्तस्यजन्मनाभार्य्यांनयस्येयंकलोद्भवा ॥ ४१ ॥ इतिसञ्चिन्त्यभूपालास्तथायततसंयुगे ॥ यथानिर्जित्यमामेतांप

तींकुरुतमानिनः ॥ ४२ ॥ इत्याभाष्यततस्तत्रशरवर्षममुंचत ॥ छादयन्पृथिवीपालांस्तमसेवमहीरुहान् ॥ ४३ ॥
तेऽपिवीरामहीपालाःशरशक्त्यृष्टिमुद्गरान् ॥ मुमुचुस्तत्प्रयुक्तांश्चदमश्चिच्छेदलीलया ॥ ४४ ॥ तेऽपितत्प्रहितान्बाणान्
तेषांचासौशरोत्करान् ॥ चिच्छेदपृथिवीशानांनरिष्यन्तात्मजोमुने ॥ ४५ ॥ वर्त्तमानेतदायुद्धेदमस्यक्षितिपात्मजैः ॥ प्रवि
वेशमहानन्दःखड्गपाणिर्यतोदमः ॥ ४६ ॥ तमायान्तंदमोदृष्ट्वाखड्गपाणिंमहामृधे ॥ मुमोचशरवर्षाणिवर्षाणीवपुरन्दरः
॥ ४७ ॥ तदस्त्राणिततस्तानिशरजालानितत्क्षणात् ॥ महानन्दःप्रचिच्छेदखड्गेनान्यानवंचयत् ॥ ४८ ॥ ततोरोषात्
समारुह्यतंदमस्यतदारथम् ॥ महानन्दोमहावीर्योदमेनयुयुधेसह ॥ ४९ ॥ बहुधायुध्यमानस्यमहानन्दस्यलाघवा
त् ॥ दमोमुमोचहृदयेशरंकालानलप्रभम् ॥ ५० ॥ तंलग्नमात्मनोत्कृष्यविभिन्नेनततोहृदा ॥ दमंप्रतिविचिक्षेपमहान
न्दोऽसिमुज्ज्वलम् ॥ ५१ ॥ पतन्तंचैनमुल्काभंशक्त्याचिक्षेपतंदमः ॥ शिरोवैतसपत्रेणमहानन्दस्यचाच्छिनत् ॥
॥ ५२ ॥ तस्मिन्हतेमहानन्देप्राचुर्य्येणपराङ्मुखाः ॥ बभूवुःपार्थिवास्तस्थौवपुष्मान्कुण्डिनाधिपः ॥ ५३ ॥ दमेन
युयुधेचासौबलगर्वमदान्वितः ॥ दाक्षिणात्यमहीपालतनयोरणगोचरः ॥ ५४ ॥ युध्यमानस्यतस्योग्रंकरवालंसवै
लघु ॥ चिच्छेदसारथेश्चैवशिरःसंख्येतथाध्वजम् ॥ ५५ ॥ छिन्नखड्गोगदांसोऽथजग्राहबहुकण्टकाम् ॥ तामप्यस्यस
चिच्छेदकरस्थामेवसत्वरः ॥ ५६ ॥ यावदन्यत्समादत्तेसवपुष्मान्वरायुधम् ॥ तावच्छरेणतंविद्धादमोभूमावपातयत्
॥ ५७ ॥ सपातितस्ततोभूमौविह्वलाङ्गःसवेपथुः ॥ विनिवृत्तमतिर्युद्धादभूत्क्षितिपात्मजः ॥ ५८ ॥ तमालोक्यतथाभू
तमयुद्धमतिमात्मवान् ॥ उत्सृज्यादायसुमनांसुमनाःप्रयर्[illegible]दमः ॥ ५९ ॥ ततोदशार्णाधिपतिःप्रीतिमानकरोत्तयोः ॥

दमस्यसुमनायाश्चविवाहंविधिपूर्वकम् ॥ ६० ॥ कृतदारो [illegible] स्तत्रदशार्णाधिपतेःपुरे ॥ स्थित्वाऽल्पकालंप्रययौसभा
र्योनिजमन्दिरम् ॥ ६१ ॥ दशार्णाधिपतिश्चासौदत्वानागांस्तुरङ्गमान् ॥ रथगोऽश्वखरोष्ट्रांश्चदासीदासांस्तथाबहून्
॥ ६२ ॥ वस्त्रालङ्कारचापादिवरोपस्करमासनम् ॥ अन्यैस्तैश्चतथाभाण्डैःपरिपूर्णंव्यसर्जयत् ॥ ६३ ॥ इतिश्रीमार्क
ण्डेयपुराणेदमचरितेएकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ मार्कण्डेयउवाच ॥ ॥ सतांलब्ध्वातथापत्नींसुमनांसुम
हामुने ॥ प्रणम्यसपितुःपादौमातुश्चक्षितिपात्मजः ॥ १ ॥ साचतौश्वशुरौसुभ्रूर्ननामसुमनातदा ॥ ताभ्यांतौचतदावि
प्रआशीर्भिरभिनन्दितौ ॥ २ ॥ महोत्सवश्चसंजज्ञेनरिष्यन्तस्यवैपुरे ॥ कृतदारेचसंप्राप्तेदशार्णाधिपतेःपुरात् ॥ ३ ॥ स
म्बन्धिनंदशार्णेशंजितांश्चपृथिवीश्वरान् ॥ श्रुत्वापुत्रेणमुमुदेनरिष्यन्तोमहीपतिः ॥ ४ ॥ सोऽपिरेमेसुमनयामहाराजसुतो
दमः ॥ वरोद्यानवनोद्देशप्रासादगिरिसानुषु ॥ ५ ॥ अथकालेनमहतारममाणादमेनसा ॥ अवापगर्भंसुमनादशार्णाधि
पतेःसुता ॥ ६ ॥ सोऽपिराजानरिष्यन्तोभुक्तभोगोमहीपतिः ॥ वयःपरिणतिंप्राप्यदमंराज्येऽभिषिच्यच ॥ ७ ॥ वनं
जगामेंद्रसेनापत्नीचास्यतपस्विनी ॥ वानप्रस्थविधानेनसतत्रसमतिष्ठत ॥ ८ ॥ दाक्षिणात्यःसुदुर्वृत्तःसंक्रन्दनसुतो
वने ॥ वपुष्मान्सम्मृगान्हन्तुंययावल्पपदानुगः ॥ ९ ॥ सतंदृष्ट्वानरिष्यन्तंतापसंमलपङ्किनम् ॥ इन्द्रसेनांचतत्पत्नींत
पसातिसुदुर्बलाम् ॥ १० ॥ पप्रच्छकस्त्वंभोविप्रःक्षत्रियोवावनेचरः ॥ वानप्रस्थमनुप्राप्तोवैश्योवाममकथ्यताम् ॥ ११ ॥
ततोमौनव्रतीभूपोनहितस्योत्तरंददौ ॥ इन्द्रसेनाचतत्सर्वमाचष्टास्मैयथातथम् ॥ १२ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ ज्ञा
त्वातञ्चनरिष्यन्तंवपुष्मान्पितरंरिपोः ॥ प्राप्तोऽस्मीतिवदन्कोपात्जटासुपरिगृह्यच ॥ १३ ॥ हाहेतिचन्द्रसेनायांरुद

न्त्यांबाष्पगद्गदम् ॥ चकर्षकोपात्खड्गंचवाक्यंचेदमुवाचह ॥ १४ ॥ नीजत[illegible]मरेयेनयेनमेसु[illegible]हता ॥ दमस्यतस्यपि
तरंहनिष्येऽवतुतन्दमः ॥ १५ ॥ येनाखिलमहीपालपुत्राःकन्या[illegible]ः ॥ अवधूताहनिष्येऽहंपितरंतस्यदुर्मतेः ॥ १६ ॥
यौवनप्यग्ररूपेषुमदोयस्यदुरात्मनः ॥ सदमोवारयत्वेषहन्मितस्यरिपोर्गुरुम् ॥ १७ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ इत्यु
क्त्वासदुराचारोवपुष्मानवनीपतिः ॥ क्रन्दन्त्यामिन्द्रसेनायांशिरश्चिच्छेदतस्यच ॥ १८ ॥ ततोधिग्धिङ्मुनिजनाअन्ये
चवनवासिनः ॥ तमूचुःसचतंहत्वाजगामस्वपुरंवनात् ॥ १९ ॥ गतेतस्मिन्विनिश्वस्यसेन्द्रसेनावपुष्मति ॥ प्रेषयामा
सपुत्रस्यसमीपंशूद्रतापसम् ॥ २० ॥ गच्छेथाआशुमेपुत्रंदमंब्रूहिवचोमम ॥ अभिज्ञोत्थसिमद्भर्तुंवृत्तान्तंप्रोच्यतेऽत्रकि
म् ॥ २१ ॥ तथापिवाच्यःपुत्रोमेयद्ब्रवीम्यतिदुःखिता ॥ लंघनामीदृशींप्राप्तांविलोक्यैतांमहीपतेः ॥ २२ ॥ मद्भर्त्राऽ
धिकृतोराजाचतुर्णांपरिपालकः ॥ त्वमाश्रमाणांकिंयुक्तंतापसान्यन्नरक्षसि ॥ २३ ॥ भर्त्तामम नरिष्यन्तस्तापसस्तपसि
स्थितः ॥ विलपन्त्यास्तथानाथोयथानास्तितथात्वयि ॥ २४ ॥ आकृष्यकेशेषुबलादपराधंविनाततः ॥ हतोवपुष्मता
ख्यातिमितितेभूपातिर्गता ॥ २५ ॥ एवंस्थितेतत्क्रियतांयथाधर्मोनलुप्यते ॥ तथाचनैववक्तव्यंमाताहंतापसीयतः ॥ २६ ॥
पितावृद्धस्तपस्वीचनापराधेनदूषितः ॥ निहतोयेनयत्तस्यकर्त्तव्यंतद्विचिन्त्यताम् ॥ २७ ॥ सन्तितेमन्त्रिणोवीराःसर्व
शास्त्रार्थवेदिनः ॥ तैःसहालोच्ययत्कार्य्यमेवंभूतेकुरुष्वतत् ॥ २८ ॥ नास्माकमधिकारोऽत्रतापसानांनराधिप ॥ कुरुष्वै
तदितीत्थंत्वमेवंभूपतिभाषितम् ॥ २९ ॥ विदूरथस्यजनकोयवनेनयथाहतः ॥ तथायंतवपुत्रस्यकुलंतेनविनाशित

[illegible]नाप्यखिलपातालवासिनःपन्नगाहताः ॥ ३१ ॥ पराश
म् ॥ ३० ॥ जन्भस्यासुरराजस्यपितादष्टोभुजङ्गमैः ॥

रेणपितरंशक्तिंतंरक्षसाऽऽहतम् ॥ श्रुत्वाऽग्नौपातितंकृतूरक्षसामभवत्कुलम् ॥ ३२ ॥ अन्यस्यापिस्ववंशस्य
लंघनाक्रियतेहिया ॥ तांनालंक्षत्रियःसोढुंकिंपुनःपितृमारणम् ॥ ३३ ॥ नायंपितातेनिहतोनास्मिन्शस्त्रंनिपातितम् ॥
त्वामत्रनिहतंमन्येत्वयिशस्त्रंनिपातितम् ॥ ३४ ॥ बिभेत्यस्यहिकःशस्त्रंन्यस्तंयेनवनौकसाम् ॥ तवभूपस्यपुत्रस्यमाबिभे
तुबिभेतुवा ॥ ३५ ॥ तवेयंलंघनायुक्तायदस्मिंस्तत्समाचर ॥ वपुष्मतिमहाराजसभृत्यज्ञातिबान्धवे ॥ ३६ ॥ ॥ मार्क
ण्डेयउवाच ॥ ॥ इतिसंक्रान्तसन्देशमिन्द्रसेनाविसृज्यतम् ॥ पतिदेहमुपाश्लिष्यविवेशाग्निंमनस्विनी ॥ ३७ ॥ ॥ इति
श्रीमार्कण्डेयपुराणेदमचरितेद्वात्रिंशदधिकशततमोध्यायः ॥ १३२ ॥ मार्कण्डेयउवाच ॥ इन्द्रसेनासमाज्ञप्तःसगत्वाशूद्रता
पसः ॥ समाचष्टयथापूर्वंदमायनिधनंपितुः ॥ १ ॥ तापसेनसमाख्यातेदमस्तेनपितुर्वधे ॥ क्रोधेनातीवजज्वालहविषे
वाग्निरुद्धतः ॥ २ ॥ सतुक्रोधाग्निनाधीरोदह्यमानोमहामुने ॥ करंकरेणनिपिष्यवाक्यमेतदुवाचह ॥ ३ ॥ अना
थइवमेतातोमयिपुत्रेतुजीवति ॥ घातितःसुनृशंसेनपरिभूयकुलंमम ॥ ४ ॥ तापंकरोम्यहंकिंवाप्येषक्लैब्यात्क्षमा
म्यहम् ॥ दुर्वृत्तशान्तौशिष्टानांपालनेऽधिकृतावयम् ॥ ५ ॥ पित्रातंचापिनिहतंदृष्ट्वाजीवन्तिशत्रवः ॥ तत्किमेतेनबहु
नाहातातेतिचकिंपुनः ॥ ६ ॥ विलापेनात्रयत्कृत्यंतदेषोऽत्रकरोम्यहम् ॥ यद्यहंतस्यरक्तेनदेहोत्थेनवपुष्मतः ॥ नक
रोमिगुरोस्तृप्तिंतत्प्रवेक्ष्येहुताशनम् ॥ ७ ॥ तच्छोणितेनोदककर्मतस्यमांसेनसम्यग्द्विजभोजनंच ॥ कुर्यांपितुस्त
स्यचपिंडदानंनचेत्प्रवेक्ष्यामिहुताशनंतत् ॥ ८ ॥ साहाय्यमस्यासुरदेवयक्षगन्धर्वविद्याधरसिद्धसंघाः ॥ कुर्वन्तिचेत्तानपि
चास्त्रपूगैर्भस्मीकरोम्येषरुषासमेतः ॥ ९ ॥ निःशूरमाधार्मिकमप्रशस्तंतंदाक्षिणात्यंसमरेनिहत्य ॥ भोक्ष्येततोऽहंपृ

थिवींचकृत्स्नांवह्निंप्रवेक्ष्याम्यनिहत्यतंवा ॥ १० ॥ सुदुर्मतिंतापसवृद्धघातिनंवनस्थगंसाधुविधिंविदग्धगम् ॥ हन्ताहम
द्याखिलबन्धुमित्रपदातिहस्त्यश्वबलैःसमेतम् ॥ ११ ॥ एषोऽहमादायधनुःसखड्गोरथीतथैवारिबलंसमेत्य ॥ करोमिवै
यत्कदनंसमस्ताःपश्यन्तुमेदेवगणाःसमेताः ॥ १२ ॥ योयःसहायोभविताद्यतस्यमयासमेतस्यरणायभूयः ॥ तस्यै
वनिःशेषकुलक्षयायसमुद्यतोऽहंनिजबाहुसैन्यः ॥ १३ ॥ यदिकुलिशकरोऽस्मिन्संयुगेदेवराजःपितृपतिरथचोग्रंदण्ड
मुद्यम्यकोपात् ॥ धनपतिवरुणार्कारक्षितुन्तंयतन्तेनिशितशरवरौघैर्घातयिष्येतथापि ॥ १४ ॥ नियतमतिरदोषःकान
नाखण्डलौकानिपतितफलभक्षःसर्वभूतेषुमैत्रः ॥ प्रभवतिमयिपुत्रेहिंसितोयेनतातःपिशितरुधिरतृप्तास्तस्यसन्त्वद्य
गृध्राः ॥ १५ ॥ इतिश्रीमार्कंडेयपुराणेदमचरितेत्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ छ ॥ ॥ छ ॥
॥ मार्कण्डेयउवाच ॥ ॥ इतिप्रतिज्ञायतदानरिष्यंतसुतोदमः ॥ कोपामर्षविवृत्ताक्षःश्मश्रुमावृत्यपाणिना ॥ १ ॥ हा
हतोऽस्मीतिपितरंध्यात्वादैवंविनिंद्यच ॥ प्रोवाचमंत्रिणःसर्वानानिनायपुरोहितं ॥ २ ॥ ॥ दमउवाच ॥ ॥ यदत्रकृत्यं
तद्ब्रूततातेप्राप्तेसुरालयं ॥ श्रुतंभवद्भिर्यत्प्रोक्तंतेनशूद्रतपस्विना ॥ ३ ॥ वृद्धस्तपस्वीसन्नृपोवानप्रस्थव्रतेस्थितः ॥ मौ
नव्रतधरोऽशस्त्रोमन्मात्राचेंद्रसेनया ॥ ४ ॥ प्रोक्तंसंसृष्टयास्वात्म्याद्याथातथ्यंवपुष्मते ॥ तेनापिखड्गमाकृष्यजटांसव्ये
नपाणिना ॥ ५ ॥ धृत्वाजघानदुष्टात्मालोकनाथमनाथवत् ॥ माताचसंदिश्यहिमांधिकृशब्दंब्रुवतीसती ॥ ६ ॥ मंदभा
ग्यंचनिःश्रीकंप्रविष्टाहव्यवाहनं ॥ तमालिंग्यनरिष्यंतंप्रयातात्रिदशालयं ॥ ७ ॥ सोऽहमद्यकरिष्यामियन्मेमातुरुदीरि

तं ॥ हस्त्यश्वरथपादातंसैन्यंचपरिकल्प्यतां ॥ ८ ॥ अनि[illegible]त्यापितुर्वैरमहत्वापितृघातकं ॥ अकृत्वाचवचोमातुर्जीवितुं

मा०पु० ॥५५॥

किमिहोत्सहे ॥ ९ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ मंत्रिणस्तद्व.. श्रुत्वाहाहेत्युक्त्वातथाचतत् ॥ कृतवंतोविमनसःसभृत्यब अ० १३४
लवाहनाः॥१०॥निर्ययुःसपरीवाराःपुरस्कृत्यदमंनृपं ॥ गृहीत्वाचाशिषोविप्रात्त्रिकालज्ञात्पुरोधसः ॥ ११ ॥ अहिराडिव
निःश्वस्यदमःप्रायाद्वपुष्मतं॥सीमापालादिसामंतान्निघ्नन्याम्यांदिशंत्वरा ॥ १२ ॥ गिरीक्ष्यतंसमायांतंवपुष्मान्मर्षपू
रितः॥संक्रंदनसुतेनापिदमोज्ञातोवपुष्मता ॥ आयातःसपरीवारःसामात्यःसपरिच्छदः ॥१३॥ अकंपितेनमनसासस्सै
न्यानिदिदेशह॥दूतंचप्रेषयामासनिर्गम्यनगराद्बहिः॥१४॥त्वंशीघ्रतरमागच्छनरिष्यंतःप्रतीक्षते॥सभार्यक्षत्रबंधोत्वंसमा
याहिममांतिकं ॥१५॥ इमेमद्बाहुनिर्मुक्ताःशिताबाणाःपिपासिताः॥भित्त्वाशरीरंसंग्रामेपास्यंतिरुधिरंतव॥१६॥श्रुत्वादम
स्तुतत्सर्वंदूतप्रोक्तंययौत्वरन् ॥ स्मृत्वाप्रतिज्ञांपूर्वोक्तांनिःश्वसन्नुरगोयथा ॥ १७ ॥ आहूतःसमरेचैवपुमान्सेनावि
कत्थनः ॥ ततोयुद्धमतीवासीद्दमस्यचवपुष्मतः ॥ १८ ॥ रथीचरथिनानागीनागिनाहयिनाहयी ॥ अयुध्यंतचवि
प्रर्षेतद्युद्धंतुमुलंत्वभूत ॥ १९ ॥ पश्यतांसर्वदेवानांसिद्धगंधर्वरक्षसां ॥ चकंपेवसुधाब्रह्मन्युध्यमानेदमेयुधि ॥ २० ॥
नगजोनरथीनाश्वस्तस्यबाणसहस्तुयः ॥ ततोदमेनयुयुधेसेनाध्यक्षोवपुष्मतः ॥ २१ ॥ हृदिविव्याधचदमइषुणागाध
मांतिकं ॥ तस्मिन्निपतितेसैन्यंपलायनपरंत्वभूत् ॥ २२ ॥ सस्वामिनंततःप्राहदमःशत्रुंदमस्तथा ॥ क्वयासिदुष्टपित
रंघतायित्वातपस्विनं ॥ २३ ॥ अत्रा..चतपस्यंतंक्षत्रियोसिनिवर्ततां ॥ ततोनिवृत्यसदमंयोधयामाससानुजः ॥ २४ ॥ ॥२५॥
सपुत्रसहसंबधिबांधवैर्युयुधेरथी ॥ ततःशरासनान्मुक्तबाणैर्व्याप्तास्ततोदिशः ॥ २५ ॥ दमंचसरथंचाशुशरजालैरपूर
यत् ॥ ततःपितृवधोत्थेनकोपेनसदमस्तथा ॥ २६ ॥ चिच्छेदतांश्छरास्तेषांविव्याधान्यैश्चतानपि ॥ एकैनैकेनबाणेन

०पु०
५६॥

व्रजेत् ॥ अष्टादशपुराणानियानिप्राहपितामहः ॥ ७ ॥ तेषांतुसदज्ञेयंमार्कंडेयंसुविश्रुतं ॥ ब्राह्मंपाद्मंवैष्णवंचशैवं
वतंतथा ॥ ८ ॥ तथान्यंनारदीयंचमार्कंडेयंचसप्तमं ॥ आग्नेयमष्टंप्रोक्तंभाविष्यंनवमंतथा ॥९॥ दशमंब्रह्मवैवर्तंलैंगमेका
दशंस्मृतं ॥ वाराहंद्वादशंप्रोक्तंस्कांदमत्रत्रयोदशं ॥ १० ॥ चतुर्दशंवामनंचकौर्मंपंचदशंतथा ॥ मात्स्यंचगारुडंचैवब्रह्मांडं
चततःपरं ॥ ११ ॥ अष्टादशपुराणानांनामधेयानियःपठेत् ॥ त्रिसंध्यंजपतेनित्यंसोऽश्वमेधफलंलभेत् ॥ १२ ॥ सर्गश्चप्र
तिसर्गश्चवंशोमन्वंतराणिच ॥ वंशानुचरितंचैवपुराणंपंचलक्षणं ॥ १३ ॥ चतुःप्रश्नसमोपेतंपुराणंत्वेतदुत्तमं ॥
पुनश्चतेपापंकल्पकोटिशतैःकृतं ॥ १४ ॥ ब्रह्महत्यादिपापानिचान्यान्यशुभानिच ॥ तानिसर्वाणिनश्यंतितृणं
यथा ॥ १५ ॥ पुष्करेदानजंपुण्यंश्रवणादस्यजायते ॥ सर्वेभ्योधिकफलंसमाप्त्याचाधिगच्छति ॥ १६ ॥ यःश्रा
येत्तंयथादेवपितामहं ॥ गंधपुष्पैस्तथावस्त्रैर्ब्राह्मणानांचतर्पणैः ॥१७॥ यथाशक्त्याचदातव्यंनृपैश्वर्यं
राणमखिलंवेदार्थैरुपबृंहितं ॥ धर्मशास्त्रैकनिलयंश्रुत्वासर्वार्थमाप्नुयात् ॥ १८ ॥ श्रुत्वापुराणमखि
धः ॥ धर्मार्थकाममोक्षाणांयथोक्तफलहेतवे ॥ १९ ॥ दद्याद्गांगुरवेस्वर्णवस्त्रालंकारसंयुतां ॥ श्रवण
नैःसंतोषयेद्गुरुं ॥ २० ॥ अपूज्यपाठकर्तारंश्लोकमेकंशृणोतियः ॥ नासौपुण्यमवाप्नोतिशास्त्रचोरःस
नतस्यदेवाःप्रीणंतिपितरोनैवपुत्रकान् ॥ दत्तंश्राद्धंतथेच्छंतितीर्थस्नानफलंनच ॥२२॥ लभतेशास्त्रचो
दि ॥ अवज्ञयानश्रोतव्यंशास्त्रमेतद्विचक्षणैः ॥ २३ ॥ पठ्यमानेत्ववज्ञातेसाधुभिःशास्त्रउत्तमे ॥

तमूर्खःप्रजायते ॥ २४ ॥ श्रुत्वातत्पूजयेद्यस्तुपुराणंसप्तमंपुनः ॥ सर्वपापविनिर्मुक्तःपुनात्येव

मा०पु०
२५५

किमिहोत्सहे ॥ ९ ॥ ॥ मार्कण्डेयउवाच ॥ ॥ मंत्रिणस्तद्व[illegible]श्रुत्वाहाहेत्युक्त्वातथाचतत् ॥ कृतवंतोविमनसःसभृत्यब
लवाहनाः॥१०॥निर्ययुःसपरीवाराःपुरस्कृत्यदमंनृपं ॥ गृहीत्वाचाशिषोविप्रात्रिकालज्ञात्पुरोधसः ॥ ११ ॥ अहिराडिव
निःश्वस्यदमःप्रायाद्वपुष्मतं॥सीमापालादिसामंतान्निघ्नन्यान्यांदिशंत्वरा ॥ १२ ॥ गिरीक्ष्यतंसमायांतंवपुष्मान्मर्षपू
रितः॥संक्रंदनसुतेनापिदमोज्ञातोवपुष्मता ॥ आयातःसपरीवारःसामात्यःसपरिच्छदः ॥१३॥ अकंपितेनमनसासासै
न्यानिदिदेशह॥दूतंचप्रेषयामासनिर्गम्यनगराद्बहिः॥१४॥त्वंशीघ्रतरमागच्छनरिष्यंतःप्रतीक्षते॥सभार्यक्षत्रबंधोत्वंसमा
याहिममांतिकं ॥१५॥ इमेमद्बाहुनिर्मुक्ताःशिताबाणाःपिपासिताः॥भित्त्वाशरीरंसंग्रामेपास्यंतिरुधिरंतव॥१६॥श्रुत्वादम
स्तुतत्सर्वंदूतप्रोक्तंययौत्वरन् ॥ स्मृत्वाप्रतिज्ञांपूर्वोक्तांनिःश्वसन्नुरगोयथा ॥ १७ ॥ आहूतःसमरेचैवपुमान्सेनावि
कत्थनः ॥ ततोयुद्धमतीवासीद्दमस्यचवपुष्मतः ॥ १८ ॥ रथीचरथिनानागीनागिनाहयिनाहयी ॥ अयुध्यंतचवि
प्रर्षेतद्युद्धंतुमुलंह्यभूत ॥ १९ ॥ पश्यतांसर्वदेवानांसिद्धगंधर्वरक्षसां ॥ चकंपेवसुधाब्रह्मन्युध्यमानेदमेयुधि ॥ २० ॥
नगजोनरथीनाश्वस्तस्यबाणसहस्तुयः ॥ ततोदमेनयुयुधेसेनाध्यक्षोवपुष्मतः ॥ २१ ॥ हृदिविव्याधचदमइषुणागाध
मांतिकं ॥ तस्मिन्निपतितेसैन्यंपलायनपरंह्यभूत् ॥ २२ ॥ सस्वामिनंततःप्राहदमःशत्रुंदमस्तथा ॥ क्वयासिदुष्टपित
रंघतायित्वातपस्विनं ॥ २३ ॥ [illegible]चतपस्यंतंक्षत्रियोसिनिवर्तता ॥ ततोनिवृत्यसदमंयोधयामाससानुजः॥ २४ ॥
सपुत्रसहसंबधिबांधवैर्युयुधेरथी ॥ ततःशरासनान्मुक्तबाणैर्व्याप्तास्ततोदिशः ॥ २५ ॥ दमंचसरथंचाशुशरजालैरपूर
यत् ॥ ततःपितृवधोत्थेनकोपेनसदमस्तथा ॥ २६ ॥ चिच्छेदतांश्छरास्तेषांविव्याधान्यैश्चतानपि ॥ एकेनैकेनबाणेन

अ०
१३४

॥२५

०पु०
५६॥

व्रजेत् ॥ अष्टादशपुराणानियानिप्राहपितामहः ॥ ७ ॥ तेषांतुसप्तमंज्ञेयंमार्कंडेयंसुविश्रुतं ॥ ब्राह्मंपाद्मंवैष्णवंचशैवं
वतंतथा ॥ ८ ॥ तथान्यंनारदीयंचमार्कंडेयंचसप्तमं ॥ आग्नेयमष्टप्रोक्तंभविष्यंनवमंतथा ॥९॥ दशमंब्रह्मवैवर्तंलैंगमेका
दशंस्मृतं ॥ वाराहंद्वादशंप्रोक्तंस्कांदमत्रत्रयोदशं ॥ १० ॥ चतुर्दवामनंचकौर्मंपंचदशंतथा ॥ मात्स्यंचगारुडंचैवब्रह्मांडं
चततःपरं ॥ ११ ॥ अष्टादशपुराणानांनामधेयानियःपठेत् ॥ त्रिसंध्यंजपतेनित्यंसोऽश्वमेधफलंलभेत् ॥ १२ ॥ सर्गश्चप्र
तिसर्गश्चवंशोमन्वंतराणिच ॥ वंशानुचरितंचैवपुराणंपंचलक्षणं ॥ १३ ॥ चतुःप्रश्नसमोपेतंपुराणंह्येतदुत्तमं ॥ श्रु
पुनश्चतेपापंकल्पकोटिशतैःकृतं ॥ १४ ॥ ब्रह्महत्यादिपापानिह्यन्यान्यान्यशुभानिच ॥ तानिसर्वाणिनश्यंतितृणं
यथा ॥ १५ ॥ पुष्करेदानजंपुण्यंश्रवणादस्यजायते ॥ सर्ववेदाधिकफलंसमाप्याचाधिगच्छति ॥ १६ ॥ यःश्र
येत्तंयथादेवपितामहं ॥ गंधपुष्पैस्तथावस्त्रैर्ब्राह्मणानांचतर्पणैः ॥१७॥ यथाशक्त्याचदातव्यंनृपैश्रा
राणमखिलंवेदार्थैरुपबृंहितं ॥ धर्मशास्त्रैकनिलयंश्रुत्वासर्वार्थमाप्नुयात् ॥ १८ ॥ श्रुत्वापुराणमखि
धः ॥ धर्मार्थकाममोक्षाणांयथोक्तफलहेतवे ॥ १९ ॥ दद्याद्गांगुरवेस्वर्णवस्त्रालंकारसंयुतां ॥ श्रवण
नैःसंतोषयेद्गुरुं ॥ २० ॥ अपूज्यपाठकर्तारंश्लोकमेकंश्रृणोतियः ॥ नासौपुण्यमवाप्नोतिशास्त्रचोरः
नतस्यदेवाःप्रीणंतिपितरोनैवपुत्रकान् ॥ दत्तंश्राद्धंतथेच्छंतितीर्थस्नानफलंनच ॥२२॥ लभतेशास्त्रचो
दि ॥ अवज्ञयानश्रोतव्यंशास्त्रमेतद्विचक्षणैः ॥ २३ ॥ पठ्यमानेत्ववज्ञातेसाधुभिःशास्त्रउत्तमे ॥
त्रमूर्खःप्रजायते ॥ २४ ॥ श्रुत्वातत्पूजयेद्यस्तुपुराणंसप्तमंपुनः ॥ सर्वपापविनिर्मुक्तःपुनात्येवं

सप्तपुत्रांस्तथाद्विज ॥ २७॥ संबंधिबांधवान्मित्रान्निनाययमसादनं ॥ वपु...ष्मा...सरथीक्राथ.... कृतवंतोविमनसःसभृत्यब अ० १३४
युयुधेचसतेनाजौशरैराशीविषोपमैः ॥ चिच्छेदतस्यतान्बाणान्सदमश्चम...हामुने ॥ २९ ॥ ...धसः॥ ११॥ अहिराडिव
जयैषिणौ ॥ परस्परशराघातविच्छिन्नधनुषौत्वरा ॥ ३० ॥ गृहीतखड्गावुत्तीर्यचिक्रीडातेमहा... तंसमायांतंवपुष्मान्मर्षपू
ध्यात्वापितरंनिहतंवने ॥ ३१ ॥ केशेष्वाकृष्यचाक्रम्यनिपात्यधरणीतले ॥ शिरोधरायांपादेन... अकंपितेनमनसासस्मै
॥ ३२ ॥ पश्यंतुदेवताःसर्वामानुषाःपन्नगाःखगाः ॥ पाट्यमानंचहृदयंक्षत्रबंधोर्वपुष्मतः ॥ ३३ ॥ ...भार्यक्षत्रबंधोत्वंसमा
दयंचव्यदारयत् ॥ पातुकामश्चससुरैःक्षतजेननिवारितः ॥ ३४ ॥ ततश्चकारतातस्यरक्तेनैवोदकक्रि... रतव॥१६॥श्रुत्वादम
प्राप्यसपितुःपुनःप्रायात्स्वमंदिरं ॥ ३५ ॥ वपुष्मतश्चमांसेनपिंडदानंचकारह ॥ ब्राह्मणान्भोजयामा... ...वपुमान्सेनावि
वान् ॥ ३६॥ एवंविधाह्रिराजानोबभूवुःसूर्यवंशजाः ॥ अन्येपिसुधियःशूरायज्विनोधर्मकोविदाः ॥ ३७॥ वेदांतप... अयुध्यंतचवि
श्वनसंख्यातुमिहोत्सहे ॥ एतेषांचरितंश्रुत्वानरःपापैःप्रमुच्यते॥३८॥ इतिश्रीमार्कंडेयपुराणेदमचरितेवपुष्मद्वधोन... ॥ २० ॥
त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ पक्षिणऊचुः॥एवमुक्त्वामिनेर्यमार्कंडेयोमहामुनिः॥विसृज्यक्रोष्टुकिमुनिं...णागाद्य
ध्याह्निकक्रियां॥१॥ अस्माभिश्चश्रुतंतस्माद्यत्तेप्रोक्तंमहामुने॥आदिसर्गमेतद्धिपुराप्रोक्तंस्वयंभुवा॥२॥ मार्कण्डेय... श्रपित
मुनयेयत्तेस्माभिरुदाहृतं॥ पुण्यंपवित्रमायुष्यंधर्मकामार्थसिद्धिदं॥...शृण्वतांसद्यःसर्वपापप्रमोचनं॥ आदावेवकु... ॥ ॥२५
तायेचप्रश्नाश्चत्वारएवहि ॥ ४ ॥ पितुःपुत्रस्यसंवादस्त...सुतःस्मृतः॥ तथामनूनांस्थितयोराज्ञांचचरितंमुने ॥ ५॥ ...र्धूर
अस्माभिरेतत्तेप्रोक्तंकिमद्यश्रोतुमिच्छसि॥ एतान्सर्वान्नरःश्रुत्वा...च ॥ ६ ॥ विधूयसर्वपापानिब्रह्मणोंते...बाणेन

यातिनसंदेहोविष्णुलोकंसनातनं ॥ च्युतस्ततःपुनर्नैवसभ[illegible]तिमानवः ॥ २६ ॥ पुराण
त् ॥ नास्तिकायनदातव्यंवृषलेवेदनिंदके ॥ २७ ॥ गुरु[illegible]जातिनिंदायतथाभग्नव्रतायच ॥
स्वादिनिंदिने ॥ २८ ॥ भिन्नमर्यादिनेचैवतथावैज्ञातिकोपि[illegible] ॥ एतेषांनैवदातव्यंप्राणैःकंठगतैर
दिवामोहाद्भयाद्वापिविशेषतः ॥ पठेद्वापाठयेद्वापिसगच्छेन्न[illegible]कंध्रुवं ॥ ३० ॥ मार्कण्डेयउवाच ॥ एत
र्गापवर्गदं ॥ यः शृणोतिपठेद्वापिसिद्धंतस्यसमीहितं ॥ ३[illegible] ॥ आधिव्याधिजदुःखेनकदाचिन्नाभियु
पापेभ्योमुच्यतेनात्रसंशयः ॥ ३२ ॥ संतःस्वजनमित्रा[illegible]णिभवंतिहितबुद्धयः ॥ नारयःसंभविष्यंतिद
॥ ३३ ॥ सदर्थोमिष्टभोगीचदुर्भिक्षैर्नावसीदति ॥ परदा[illegible]परद्रव्यपराहिंसादिकिल्बिषैः ॥ ३४ ॥ मुच्यत
त्यंचैवद्विजोत्तम ॥ ऋद्धिर्वृद्धिःस्मृतिःशांतिःश्रीःपुष्टि[illegible]च ॥ नित्यंतस्यभवेद्विप्रयः शृणोतिकथामिमां ॥
र्कण्डेयपुराणमेतदखिलंशृण्वन्नशोच्यः पुमान्योवास[illegible]दीरयेद्वसमयंशोच्योनसोपिद्विज ॥ योगज्ञानविशु
तःस्वर्गादिलोकेप्यसौशक्राद्यैश्चसुरादिभिःपरिवृतः स्वर्गेसदापूज्यते ॥ ३६ ॥ पुराणमेतच्छ्रुत्वाचज्ञानविज्ञानस
विमानवरमारुह्यस्वर्गलोकेमहीयते ॥ ३७ ॥ पुरा[illegible]ख्याचप्रख्यातःतत्त्वबुद्धिना ॥ श्लोकानांषट्सहस्राणितथा
ष्टशतानिच ॥ ३८ ॥ श्लोकास्तत्रनवाशीतिएकादशसमाहिताः ॥ कथितामुनिनापूर्वंमार्कंडेयेनधीमता ॥ ३९ ॥ जै
मिनिरुवाच ॥ ॥ भारते[illegible]संशयस्फो[illegible]कर्तव्यंनकश्चिद्वक्ष्यकरिष्यति ॥ ४० ॥ यूयंदीर्घायुषःसं
तुप्रज्ञा[illegible]बुद्धिविशारदाः ॥ [illegible] ॥ [illegible]ताद्दःखाद्दोमेन[illegible]

एतावदुक्त्वा वचनं जगाम स्वाश्रमं मुनिः ॥ चित्तस्य प्रबोधा ... मारत ॥ ४१ ॥ इति श्री मार्कण्डेयपुराणे ...
माहात्म्यश्रवणपठनफलं नाम पंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥ सम्पूर्णमिदं मार्कण्डेयमहापुराणम् ॥ श्रीशः पायात्

...प्तम्.

## शुकसागर (अर्थात्) श्रीमद्भागवतभाषा

### बारहोस्कन्ध

यद्यपि भाषाभागवत कई एक सुकवियोंने बनाई है परंतु मूलसे मिलानेमे यथार्थ मिलती नहीहै इसलिये हमने वृजभाषा... भागवतका भाषाश्लोकानुवाद कराके शुद्धता पूर्वक टैपमे उत्तम कागजपर छापाहै और बिलायती कपडेकी उत्तम जिल्द... महाशय पाठकगण इस्को एकवार मंगाकर देखना दूसरे इस हमारे शुकसागरसे यह अत्यंत विशेषताहै कि जिसस्कं... भाषा लिखी है उसमे प्रतीकके लिये प्रथमका ओर अंतका श्लोकांक लिखदीना है और बाकीके श्लोकोंके अंक सर्व... है यदि वाचनेवालेको भ्रम होयतो उसी अंकके श्लोकके अर्थ मूलसे मिलायके देखलेवे.

श्रीकृष्णदासात्मज–गंगावि...

